अह मज्झलहुअस्स।[१]

पक्खि बिराड[२] मइंदह[३]

बीणा[४] अहि जक्ख अमिअ[५] जोहलअ।

सुप्पस्स[६] पसगासण[७]

गरुड[८] बिआणेहु[९] मज्झ[१०] लहुएण ॥ २९ ॥ उग्गाहा।

---

२८। अथ पचकलस्याष्टौ भेदास्तत्र प्रथमभेदस्यादिलघुद्विगुरुरूपस्य नामान्याह ॥ सुण ॥ सुनरेंद्रोऽधिक-कुजर-गजवरदता इति दतौ च मेघ। ऐरावतस्तारापतिर्गगन उफम एतत्प्रकारेण ॥ (G)

२९। पक्षिविडालमृगेन्द्रहरिणा अहियच अमृत योहल[य]क। सुपर्ण पन्नगासनो गरुडो विजानीहि मध्यलघुकेन॥ अहिर्यच्चइति नामद्वयम् इति कश्चित। योऽस्वशब्दोऽप्यत्र वर्त्तत इति बोध्य। मध्यलघुकेन प्रयुक्तस्य पञ्चकलस्यैतानि नामानीत्यर्थ। अत्र च सुपर्णेति पवनाशनेति केचित्पठन्ति। तत्र विषमे जगणेऽपि मगणभङ्ग [?] समाधेयो भवति। (C)

२९। मध्यलघो पचकलस्य नामान्याह॥ पक्खि॥ पक्षी

---

२९। १ अह मज्झ गुरुअस्स [?] (B) मध्यलघोर्नामानि (D) २ विराल (B & C) ३ मइन्न (C), मद्द (D) मइदो (F) ४ हरीणा (B & C), हणा (D) ५ आमिअ (B), अणिघ (C) अमल (F) ६ सुपस (B C & D), सुप्पसु (F) ७ पसगासण (A), पसआसण (B & C), पसगासणु (F) ८ गुरुअ (B), गरुत (C), गरुड़ो (F) ९ बिआणेह (C), बिजाणह (F) १० मझ (D)

बहु विविह पहरणेहिं[1]
पचक्कलओ[2] गणो होइ ।
गअ रह तुरंग पाइक्क[3]
एहु[4] णामेण जाण[5] चउमत्ता[6] ॥ ३० ॥ विग्गाहा[7] ।

---

विराड् मृगेन्द्रो वीणा अहिर्यच्च अमल जोहल। सुपर्ण पन्नगाशनो गरुडो विजानीत मध्यलघुकेन ॥ २९ ॥ (G)

३० । अथ सामान्यत पञ्चचतुष्कलयोर्नामानि बहुविविहे-त्यादि । बहुविधप्रहरणे पञ्चकलो गणो भवति । गज-रथ तुरङ्ग-पादाता एतन्नाम्ना भवति [जानीहि] चतुर्मात्रिक ॥ बहूनि यानि प्रहरणानि विविधानि अवान्तरभेदयुक्तानि तैस्तद्वाचकशब्दै पञ्चकलो गणो भवति ॥ (C)

३० । * * * अथ चतुष्कलस्य सामान्यानि नामान्याह, गअ रहेति । गज रथ तुरग पद[दा]ति, एतैर्नामभि जानीहि चतुर्मात्रिकान् ॥ (E)

३० । पचकलस्य सामान्यनामान्याहार्धेन ॥ बहु ॥ बहुविविध-प्रहरणे पचकलो गणो भवति । अथ सिंहावलोकितन्यायेन

---

३० । पहरणेहिं (A & B) पहरणे (D) २ पचकलओ (D), पचक्कलओ (F) ३ पाइक्क (D), पाइक्क (F) ४ एह (D, E & F) ५ होइ (A), जाण् (D), जाणे (F) ६ चउमत्ती (F) Here follows in MS (C) the following जह सक्क सच्चलपथा[श्च]अला ना[णा]म एह पूव्व[व्व]इेब [ण] । सचल चतुष्कलाश्च ना[णा]म एह परञ्चेण ॥ ७ अक्यविपुलोद्धीति । Vide Ghosha's Compendium, pp 7-11 —Ed

तालंक[1] हार णेउर
केउरओ होंति[2] गुरुभेआ ।
सर मेरु दंड काहल
लहुभेआ होंति[3] एत्ताइ[4] ॥ ३१ ॥ गाहू[5] ।

---

चतुष्कलनामान्याह अर्द्धेन। गजो रथस्तुरग पावक एभिर्नामभिर्ज्ञेयश्चतुर्माच ॥ ३० । (G)

३१ । गुरुलघुनामान्याह द्वाभ्या [श्लोकार्द्धाभ्या]। ताडङ्को हारो नूपुर केयूरक भवन्ति गुरुभेदा । सरो मेरुर्दण्ड काहलो लघुभेदा भवन्ति एते ॥ (C)

३१ । अथैकगुरोर्नामान्याह तालकेति। ताटका हारा नूपुर केयूरम् एतानि गुरुभेदा गुरोर्नामानीति यावत्, होंति— भवति। अथैकलघोर्नामान्याह, सरेति। सर मेरु दड काहल, एत्ताइ — एतानि, लहुभेआ — लघुभेदा लघोर्नामानि, होंति— भवति। (F)

३१ । गुरुनामान्याह। ताटक हारो नूपुर केयूर भवति गुरुभेदा । लघुनामान्याह सार्धेन। सर ॥ शरमेरुदंड काहल लघुभेदा भवन्त्येतावत ॥ ३१ ॥ (G)

---

३१। ताडक (F) २ होन्ति (A & D), होन्ति (B), हन्ति (C) ३ होन्ति (A & D) होन्ति (B & C) ४ एत्ताई (D & E) ५ Here follows in (C) पूर्व्वं[व्व]द्धे गुरुद्वयस्स ना[णा]म एद। परद्धुत्रेण लहुद्वयस्स ना[णा]म ॥

संखं[1] फुल्लं[2] काहल[3]
रवं असेसेहिँ[4] होंति[5] कलअलअं[6] ।
रूअं णाणा कुसुम
रस गंधं[7] सद्द[8] परसाणं[9] ॥ ३२ ॥ गाहा ।

३२ । शख काहल अशेषरववाचका कलकलादय, रूप नानाकुसुम रस-गध-शब्द-स्पर्शा एतेऽपि लघुसञ्ज्ञा । (A)

३२ । शङ्ख स्फुटकाहल रवोऽशेषैर्भवन्ति कलकलक । रूप नाना कुसुम रसो गन्ध शल्यप्रमाण ॥ एते शब्दा गुरु[?]भेदा गुरु[?]वाचका, एवमग्रेऽपि, रवशब्दोऽशेषैनामभि सह भवन्ति लघुवाचका शङ्खादय शब्दा । कलअलओ इत्यत्र सुपसिद्ध इति क्वचित्पाठ प्रमाणमेतत् ॥ (C)

३२ । शख पुष्प काहल रव कनक लता रूप नाना कुसुम पुष्पजातीना यावति नामानि तानि सर्वाणीत्यर्थ । रस गध शब्द एते अशेषा लघुभेदा भवतीत्यनुकर्ष इति प्रमाण निश्चय । (E)

३२ । शख पुष्पकुलं काहल रव अशेषैर्भवति कलकल । रूप नाना कुसुम रसो गध शब्द स्पर्श ॥ ३२ । (G)

३२ । १ शङ्ख (B) सख (C) सक (F) २ फुल्ल (A), फुल (B, C & F) ३ कहार (A), काहाल (B & C), काहल (F) ४ असेहि (A), अशेसेहि (B), असेसेहि (C), असेसेहि (D & E) ५ होइ (A), होन्ति (B), होन्ति (C) ६ कलअलअ (A), करजलअ (D), कणअ लआ (E), कणअलअ (F) ७ गध (A & E) ८ सद्ध (C), सद्द (F) ९ परसेण (A), परमाणु (C), परमाण (D), परिसाण (F)

अह वस्म गणा ।[१]

मो तिगुरू[२] णो तिलहू

लहुगुरुआई[३] जभा[४] ज मज्झगुरू[५] ।

मज्झलहू[६] रो सो उण

अंतगुरू[७] तो बि अंतलहुएण[८] ॥ ३३ ॥ उग्गाहा ।

---

३३ । मस्त्रिगुरु SSS, नस्त्रिलघु ।।।, लघुगुर्व्वादी यभौ ।SS, S॥, जो मध्यगुरु ।S।, मध्यलघू र S।S, स पुनरन्तगुरु ।।S, तोऽपि अन्तलघुकेन SS।, एवमेकगुरुर्ग ए[क]लघुर्ल इत्यपि बोध्यम । (C)

३३ । अथ वर्णवृत्तोपयोगिनो मगणादीनष्टौ गणान्नामलक्षणाभ्यामुद्दिशति मोति इति । तिगुरु—त्रिगुरु गुरुत्रयस्वरूपो यो मगण SSS, तिलहू—त्रिलघु लघुत्रयस्वरूप इति यावत णो—नगण ।।।, आदिलघुगुरू यभौ, तेन आदौ यस्य लघु स यगण आदौ यस्य गुरु स भगण इत्यर्थ । मध्यगुरु —यस्य मध्ये गुरु स जगण । मध्यलघु —यस्य मध्ये लघु S।S स रो—रगण । अंतगुरु —यस्य अंते गुरु स पुन सो—सगण । अंतलघुना उपलक्षित तो—तगण, यस्यांते लघु स तगण इत्यर्थ । (F)

---

३३ । १ अथ वणगणा । (A & E) अथ वर्णवृत्ताना गणा ॥ (D) २ तिगुरु (C, D & E) ३ लहुगुरुआइ (B), लहुगुरुआई (C), लहुगुरुआइ (D), लहुगुरुआइ (E) ४ यभौ (C & E) जभउ (D), यभौ (F) ५ मज्झगुरु (D), मज्झमगुरू (E) ६ मज्झमलहू (E) ७ अन्तगुरू (A) अन्तगुरु (D), diopt in (C) ८ अलहुएण (B), अन्तलहुएण (C), अन्तलहुएण (D)

## अह गणदेवता।

पुहवी जल[1] सिहि[2] पवण
गश्रण सूरो श्र चदमा[4] णाश्रो।
गण अट्ठ इट्ठ[5] देश्रो[6]
जहसंख[7] पिंगले कहिश्रो[8] ॥ ३४ ॥ गाहा।

---

३३। अथ मादिगणस्वरूपमार्य्ययाह। मो तीति। मस्त्रिगुरुन-स्त्रिलघुर्लघुगुर्वादी यभौ जो मध्यगुरु। मध्यलघू र स पुनरन्तगुरु-स्तोऽप्यन्तलघु ॥ ३३ ॥ (G)

३४। अथ गणाना देवतामाह। पृथिवी जल शिखी वातो गगन सूरश्चन्द्रमा नाग। गणानामिष्टदेवा यथासख्य पिङ्गलेन कथिता ॥ वक्ष्यमाणफलदातृत्व देवतानामेव, अतो देवताकथनम्। (C)

३४। मनुष्यकवित्वे कविनायकयोर्देवताकवित्वे देवताना दुष्प्र-धर्षत्वात्कवेरेव कवित्वस्यादौ दुष्टगणपाते अनिष्टफलप्राप्तिस्तच्छान्त्यर्थं शुभगणपाते शुभफलवृद्धये च तत्त[द्]गणदेवता पूज्या इति मग णाद्यष्टगणाना क्रमेण ता आह, पुहवीति। पुहवी — पृथिवी मगणस्य त्रिगुरो १, जल — जल नगणस्य त्रिलघो २, सिहि — शिखी अग्नि यगणस्यादिलघो ३, कालो भगणस्यादिगुरो ४, गगन मध्यगुरोर्जगणस्य ५, सूर्यस्य अत[मध्य]लघो रगणस्य ६, चन्द्रमा मध्यलघो [अतगुरो] सगणस्य ७, नागा अतगुरो [लघो] तगणस्य ८,

---

३४। १ जल (C) २ सिहि (B) सिही (C) ३ वाश्रो (B & C), कालो (D), कालो (F), पवणो (F) ४ चन्द (A, B & C) ५ श्रट्ठ (A), इश्रट्ठ (E) ६ देव (E & F) ७ सश्रल (B) ८ कहिश्रो (B)

मगण यगण दुइ[1] मित्त हो[2]
भगण[3] अगण[4] हो[5] भिच्च ।
उआसीण[6] ज त दुअउ[7] गण
अवसिट्ठउ अरि णिच्च[8] ॥ ३५ ॥ दोहा ।

एते गणाष्टकेऽष्ट देवा यथासंख्य पूर्वोद्दिष्टक्रमेण पिङ्गलेन कथिताः । (L)

३४ । पृथिवी जल शिखी पवनो गगन सूरश्चन्द्रमा नाग । गणाष्टकस्येष्टदेवता यथासंख्य पिङ्गलेन कथिता ॥ आर्य्या । (G)

३५ । अथ गणेषु मित्रादिक्रमाह । मगण-नगणौ मित्रे भवत, यगण-भगणौ भृत्यौ । उदासीनौ ज-तौ द्वौ गणौ, अवशिष्टौ वैरिणौ नित्यम ॥ अवशिष्टौ सगण-रगणौ । (C)

३५ । वक्ष्यमाणशुभाशुभफलोपोद्घातेन गणाना परस्परस्य मित्रादिभाव कथयति । मगण-नगणौ द्वौ गणौ ऽऽऽ, ।।। मित्रे मित्रसञ्ज्ञाविति यावत भवत, भगण-यगणौ द्वौ गणौ ऽ।।, ।ऽऽ भृत्यौ भृत्यसञ्ज्ञौ भवत, ज-तौ जगण-तगणौ द्वौ उदासीनौ उदासीनसञ्ज्ञौ, अवशिष्टौ रगण-सगणौ अरी शत्रुसञ्ज्ञौ नित्य भवत इति क्रियापद द्विवचनान्ते सर्वत्र योज्यम । (E)

In MS (G) the gloss is wanting

३५ । १ दुक्क (B & C)　२ होइँ (B) होइ (C & F)　३ जगण (A & B) यगण (C)　४ भगण (A, B & C), यगण (E & F)　५ होइ (B, F & F) ६ उदासीन (F)　७ उभाउ (B)　८ णिइ (C)

अह गणफल ।

मगण रिद्धि[1] थिर कज्ज[2] अगण[3] सुह[4] संपअ[5] दिज्जइ
रगण मरण सपलइ[6] जगण खरकिरण[7] विसज्जइ[8] ।
तगण सुस फल कहइ सगण सहदेसु[9]व्वासइ[10]
भगण रचइ[11] मंगल अ[12]णेक[13] कइ[14] पिंगल भासइ[15] ।
जत[16] कव्व गाह दोहइ[17] मुणहु
णगण होइ पढमक्खरइ[18] ।
तसु[19] रिद्धि[20] बुद्धि[21] सव्वउ[22] फुरइ
रण राउल दुत्तर तरइ ॥ ३६ ॥ छप्पअ ।

---

३६ । गणाना फलमाह । मगण ऋद्धि स्थिरकन्द स्थैर्य्यं ददातीत्यर्थ । यगण सुखसम्पद ददाति । रगणो मरण सम्पादयति । जगण खरकिरण विसर्ज्जयति, खरकिरणशब्देन उद्वेगा-

---

३६ । १ ऋद्धि (B C E & F) २ कव्व (A) कन्द (B), left out in (C) from थिर to रिद्धि in the seventh line ३ जगण (A & B), यगण (E & F) ४ सह (B) ५ सपइ (A) ६ सपनइ (F) ७ किरणि (D) ८ विसेसइ (E) ९ देसउ (B), देसुउ (D), वास (F) १० विसज्जइ (F) ११ चवइ (A & D), रचइ (E), कुणइ (F) १२ मगलम (A & F) १३ णेम (A) णग (E), ह (F) १४ इह (B) कवि (D) १५ परिभासइ (F) In MSS (E) and (F) there is a transposition in the second and third lines—Ed १६ जइ (A) १७ कव्वदोहगाहउ (A), कव्वगाहदोहा (D), कव्वगाहादोहइ (E) कव्वहदोहइ (F) १८ पढमक्खरहि (A & B), पढमक्खरइ (D) १९ तसि (F) २० ऋद्धि (B & E) २१ सिद्धि (A) २२ सव्वइ (A), सव्वउ (C), सवइ (D), सव्व (E)

दिर्लक्ष्यते। तगण शून्यफल कथयति। सगण स्वदेशादुद्वा-सयति। भगणो रचयति मङ्गल, जानीहि कविपिङ्गलो भाषते। यावत काव्य गाहादोहादिक जानीहि नगण प्रथमाचरे तस्य ऋद्धि बुद्धि सर्व्वत्र स्फुरति, रणे राजकुले दुस्तर तरति॥ वर्ण-वृत्तेषु गणप्रतिनियमात् गाहादोहादावित्युक्त, तत्र प्रथमो नगण-श्चेद्भवेत् तदा ऋद्ध्यादिक स्यादित्यर्थ। सर्व्वश्लोके तथाभावासम्भवे हि प्रथमश्लोकेऽवश्य कार्य्यम। (C)

२६। अथ मगणाद्यष्टगणाना काव्यादौ पतने प्रत्येक फलमाह मगणेति। कवित्वस्यादौ यदि मगण पतति, तदा ऋद्धि कार्य्य स्थिर ददातीत्याकर्ष। यदि यगण पतति * * तदा मरण प्रयच्छति। यदि सगण पतति, तदा सहवासान्निजदेशादुद्वासयति। यदि तगण पतति, तदा शून्य फल कथयति। यदि जगणः पतति, तदा खरकिरण सताप विसर्जयति। भगण अनेकानि मङ्गलानि कथयति। यावत्काव्यगाथादोहास्तत्र प्रथमाचरे प्रथमगणो यदि नगणो भवति, तदा तत्र ऋद्धिबुद्धय सर्वा स्फुरति, रणे राजकुले दुस्तर तरति इति मुणछ जानीत इति कविपिगलो भाषते। (E).

२६। मगण ऋद्धि स्थिरकार्य्य यगण सुख सपत्ति ददाति, रगणे मरण सपतति, सगण सहवास विसर्जयति, स्वदेश सहवास। तगण शून्यफल कथयति। जगण खरकिरण विशेषयति। भगण करोति मगलमनेक सुकवि पिगल परिभाषते। यत्र काव्ये दोहादौ जानीत नगणो भवति प्रथमाचरे। तस्य ऋद्धि बुद्धि सर्वे स्फुरति, [रण] राजकुल दुस्तर तरति॥ (G)

अह दुगण विआरो ।[१]

मित्त मित्त दे[२] रिद्धि बुद्धि अरु मंगल दिज्जइ[३]
मित्त भिच्च थिर[४] कंध[५] जुज्झ[६] णिब्भअ[७] जअ[८] किज्जइ[९] ।
मित्त उआसे कज्ज बंध णाहि[१०] पुणु[११] पुणु[१२] छिज्जइ[१३]
मित्त होइ जइ[१४] सत्तु गोत्त बधव[१५] पीडिज्जइ[१६] ।
अरु भिच्च मित्त[१७] सब[१८] कज्ज[१९] हो[२०]
भिच्च भिच्च[२१] आअत्ति[२२] चल[२३] ।
सब[२४] भिच्च उआसे[२५] धणु[२६] णासइ[२७]
भिच्च वइरि[२८] हाकंद[२९] पल[३०] ॥ ३७ ॥ छप्पअ ।

३७ । अथ मित्रादियोगात्फलमाह । मित्रान्मित्रमृद्धिं बुद्धिम् अपर मङ्गल ददाति, मित्राद्भृत्य स्थिरकन्द युद्धे निर्भय जय

३७ । १ अथ द्विगणविचार। (A & D) २ देइ (A & D) ३ किज्जइ (A) ४ थिर (C) ५ कव्व (A & F), कम्भ (B & C), कज्ज (D) ६ जुवभ (C) ७ णिब्भअ (B & C) ८ जसु (A), ज (D) ९ दिज्जइ (A, B & C) १० बन्ध नहि (B), वध णहि (C), बध णहि (D) बध णउ (E), णहि बध (F) ११ पुण (B, D & E) १२ पुण (D & E) १३ किज्जइ (A, B, C & E) १४ जइ (A), dropt in (C) १५ वध (C) १६ पीलिज्जइ (B & C) १७ मित्ते (B, C & D) १८ सम (E), सबु (F) १९ कज्जा (C) २० होइ (D, E & F) २१ भिच्चे (D) २२ भिच्चाअत्ति (A), आअति (E), आइति (F) २३ बढ (E) २४ सव्व (B & C), सब (D), सबु (F) २५ उसे (A) 24 & 25 transposed in (F) २६ धण (C), धन (D & F) २७ नहि (C) २८ वेरि (B & D), वैरि (C & E), बैरी (F) २९ हाकन्द (B), हाकव (C) ३० पलइ (B), बफल (C)

ददाति, मित्रादुदासीन कार्य्यबन्ध नहि पुन [पुन] करोति, मित्राद्भवति यदि शत्रु गोत्रबान्धवान् पीडयति। अपर भृत्यान्मित्रेण सर्व्व काय भवति, भृत्याद्भृत्येऽप्यायतिस्खलति, भृत्यादुदासीन [सर्व्व] धन नाशयति, भृत्याद्वैरिणाक्रन्द फलति। (C)

२७। अत्र मनुष्यकविले तदुक्त फल, पर्व्वतादिवर्णने कविगत, देवतावर्णने न क्वापि। तदुक्तमभियुक्तै,— वर्ण्यते मनुजो यत्र फल तद्गतमादिशेत्। अन्यथा तु कृते काव्ये कवेर्दोषावह फल॥ देवता वर्ण्यते यत्र काव्ये क्वापि कवीश्वरै। मित्राऽमित्रविचारो वा न तत्र फलकल्पनेति॥ उपर्य्युक्तगणगुणानपवदन् द्विगणविचारमाह, मित्त मित्तेति। मित्रात मित्र यदि पतति तदेति शेष सर्वत्र यथायथ योजनीय, ऋद्धि बुद्धिम अपर मगल ददाति, मित्राद्भृत्यो यदि पतति तदा युद्धे स्कन्धस्थैर्य निर्भय जय करोति, मित्रादुदासीनो यदि पतति तदा कार्यबध कार्यप्रतिबध खलु पुन पुन करोति, मित्रात् यदि शत्रु भवति तदा गोत्रबान्धवान् पीड़यति, अपर भृत्यात् मित्र यदि पतति तदा सर्वाणि कार्याणि भवति, भृत्यात् भृत्यो यदि पतति तदा आयतिरुत्तरकालो वर्द्धते, भृत्यात उदासीनो यदि पतति तदा धन नश्यति, भृत्यात् वैरी यदि पतति तदा हाक्रद हाहाकार पतति। (E)

२७। अथ द्विगणफलमाह॥ मित्त॥ मित्रगणान्मित्रगणश्चेत् ऋद्धि बुद्धिमन्यन्मगल ददाति। मित्रात भृत्य स्थिर काव्य युद्धे निर्भय जय करोति। कज्जेति पाठे कार्य। मित्रादुदासीने कार्यस्य नास्ति बध पुन चीयते। मित्राद्भवति यदि शत्रुर्मित्र-

उआसीण[1] जइ मित्त कज्ज[2] किछु[3] ण[4] देखावइ
उआसीण जइ भिच्च सव्व आअत्ति[5] चलावइ[6] ।
उआसीण उआसे मंदभल[7] किछुअ[8] ण[9] देक्खिअ[10]
उआसीण[11] जइ सत्तु गोत्त वइरिउ[12] कइ[13] लेक्खिअ[14] ।
जइ सत्तु मित्त हो[15] सुण्ण[16] फल[17]
सत्तु भिच्च हो[15] घरणि[18] णास[19] ।
पुणु[20] सत्तु उआसे धण[21] णासइ
सत्तु सत्तु णाअक्क[22] खस[23] ॥ ३८ ॥ छप्पअ ।

[गोत्र]बाधवान् पीड़यति । अन्यत् भृत्यान्मित्रे सर्वं कार्यं भवति । भृत्याद्भृत्ये आयति चला । भृत्यादुदासे सर्वं धन नश्यति । भृत्याद्वैरिणि आक्रंद पतति ॥ ३७ ॥ (C)

३८ । उदासीनाद्यदि मित्र किञ्चित्कार्य्यबन्ध दर्शयति । उदासीनाद्यदि भृत्य सर्व्वामायतिमानयति । उदासीनादुदासीने भद्र

३८ । १ उआसिण (E) २ कज्जु (F) ३ किच्छ (C) कुछ (F) ४ वध (A, B & D), मइ (E & F) ५ आअत्त (C) ६ आनावइ (B), अणावइ (C) चलावेइ (F) ७ मद्दफल (B & D), मन्दभ (C) मद्दभलु (E) ८ किछु (B), किच्छ (C), किछुइ (E) ९ णहि (E & F) १० जाणिआ (D) ११ उआसो (D) १२ वहिरिअ (B), वइरिअ (C), वैरीउ (E & F) १३ कहि (B), क (D) १४ माणिअ (D) १५ होइ (E) १६ सुण (A) १७ फला (C) १८ धरिणि (A & B) १९ णासइ (E) २० पुणि (D), पुण (E) २१ धण (B & C), धणु (E) २२ णायक (C) २३ णासे (B & C), खुप (E), ख (F)

फल किमपि न दृश्यते। उदासीनाद्यदि प्रभुर्गोत्रवैरिकृत्य लिख्यते। यदि प्रभुतो मित्र भवति शून्यफल। प्रभुतो भृत्यो गृहिणी नाशयति। पुन प्रभुत उदासीनो धन नाशयति। प्रभुत प्रभुर्नायक खण्डयति। अयञ्च मित्रादियोग श्लोकादिस्थस्तत्तत्फल जनयति, तत्र यथोचितयोगो माचावृत्तेषु सम्भवति, तत्र च प्रतिश्लोक तदसम्भवेऽपि प्रथमश्लोके यथोचितयोग कार्य, यथा पाके ग्रन्थे पुलकितमित्यादौ समुचितयोगात् नैव छन्दसा ग्रन्थदेवस्तवादौ गुरुराजादिसमचञ्च प्रथ[म]श्लोक पाद्य, यथा कश्चित्कान्तेत्यादौ मित्राद्भृत्यगण, यथा वा शिव शक्त्येत्यादौ भृत्यान्मित्रगण।

३८। उदासीनात यदि मित्र पतति तदा कार्य किमपि अनिष्ट दर्शयति, उदासीनात् यदि भृत्य पतति तदा सर्व्वामायति चालयति, उदासीनात् यदि उदासीन पतति तदा असत्फल किमपि न दृश्यते, उदासीनात् यदि प्रभु पतति तदा गोत्रमपि वैरिकृत ज्ञेयम, यदि प्रभोर्मित्र भवति तदा शून्य फल भवति किमपि फल न भवतीत्यर्थ। यदि प्रभोर्भृत्यो भवति तदा गृहिणी नश्यति, पुन प्रभोरनुदासीनो यदि पतति तदा धन नश्यति, यदि प्रभो प्रभु पतति तदा नायक स्खलति नश्यतीत्यर्थ॥ (E)

३८। उदासीनाद्यदि मित्र किचिन्मद दर्शयति। उदासीनाद्यदि भृत्य सर्वा आ[य]तीश्चालयति प्रथ[य]मायतिमानयति। उदासीनादुदासीने अशुभ किचिन्नहि दृश्यते। उदासीनाद्यदि प्रभुर्गोत्रं वैरिवमृच्छते। यदि प्रभोर्मित्र भवति शून्यफल। प्रभो-

अह मत्ताणं उद्दिट्टं ।[१]

पुव्व[२] जुअल सरि अंका दिज्जसु
गुरु सिर अंके[३] सेस[४] मिटिज्जसु[५] ।
उबरल अंके[६] लेखिख कहावहु[७]
ते परि[८] धुअ उद्दिट्टं जाणहु[९] ॥ ३९ ॥ [अलिल्ला]

र्त्यो [यदि] भवति गृहिणी नश्यति । पुन शचोरुदासीन धन नश्यति । शचो शचौ नायक चयति ॥ इदमन्यचोक्तम—

वर्ण्यते नायको यच फल तद्गतमादिशेत ।
अन्यथा तु कृते काव्ये कवेर्दोषावह फलम ॥
देवता वर्ण्यते यच काव्ये क्वापि कवीश्वरै ।
मिचामिचविचारो वा न तच फलकल्पना ।
देवतावाचका शब्दा ये च भद्रादिवाचका ।
ते सर्वे नैव निन्द्या स्युर्लिपितो गणतोऽपि वा ॥ ३८ । (G)

३९ । अथ माचाणामुद्दिष्ट । पूर्व्वयुगलसदृशानङ्कान् देहि, गुरुशिरोऽङ्के शेष शोधय । उद्धृत्तमङ्क लिखिलानय, तेन पुनर्ध्रुवमुद्दिष्ट जानीहि ॥ एतादृशो गणोऽमुकप्रस्तारस्य कुच वर्त्तते इति प्रश्ने तत्कथनायोद्दिष्टमुच्यते । तच चाय प्रकार — षट्कलप्रस्तारस्य

३९। अथ माचाणामुद्दिष्ट (A), अह मत्तानामुद्दिट्ठ (B), अथ माचाया उद्दिष्ट (D) २ पूर्व्व (B) पूव्व (C) पुव (D) पूव्व (F) ३ अक (A) अङ्क (B & C) अकन्ह (E) ४ सेख (A) ५ मेटिज्जसु (A), मिटज्जसु (B & C) ६ अक (A, B, C, D & E) ७ कहुआण (A B & C) कह आवह (D), कह आणहु (E) ८ तहि पर (F) ९ जाण (A), जाणह (D)

त्रिगुरु कुत्र वर्त्तते इति प्रश्ने, गुरुत्रय ऽऽऽ लिखित्वा तत्र पूर्व्वयुगलसदृशाङ्को देय । तत्र च पूर्व्वाभावे कथ पूर्व्वयुगलसदृशत्वम्, अतः प्रथमत कश्चिदङ्को देय, स च प्रथमोपस्थितत्वादेकाङ्क एव,

| | |
|---|---|
| १ | |
| ऽ | |
| २ | |

तस्य च बुद्ध्याकर्षणाद्युगलत्व सम्पाद्य द्वयाङ्को लेख्य, तत्र च गुरोर्द्विमात्रत्वादुपर्य्यधश्चाङ्को देय, लघोरेकमात्रत्वादुपर्य्येव,

| | |
|---|---|
| १ | २ |
| ऽ | ऽ |
| २ | ५ |

तेन च [?] ततश्च एको द्वाविति मिलित्वा त्रय द्वितीयगुरो[रु]परि देय, द्वय त्रयमिति मिलित्वा पञ्चाङ्कस्तदधो देय, तेन १, २, ३, ५, तत पञ्च त्रयमिति मिलित्वाष्टाङ्कस्तृतीयगुरोरुपरि देय, १, २, ३, ५, ८, पञ्चाष्टाविति मिलित्वा त्रयोदशाङ्कस्तदधो देय । तथाच १, २, ३, ५, ८, १३ पूर्व्वयुगले सदृशाङ्कदानवृत्त, ततश्च गुरुशिर स्थिताङ्कानेकीकृत्य शेषाङ्कात्तेऽङ्का दूरीकरणीया भवन्ति। अ[त्र] गुरुशिरोऽङ्का एकस्त्रयमष्टाविति मिलित्वा द्वादश, शेषाङ्कस्त्रयोदश, इत्थ त्रयोदशे द्वादशदूरीकरणे एकस्यावशिष्टत्वात् प्रथमत एव त्रिगुरुर्गण इति लभ्यते। इदञ्च बोध्यम — अन्तिमो योऽङ्क तावत्संख्य प्रस्तारो भवति, तेन षट्कलस्य त्रयोदशभेद प्रस्तार इति बोध्यम्। एव सुखबोधाय स्थलान्तरमपि दर्श्यते — षट्कलप्रस्तारे आदावन्ते च गुरुर्मध्ये लघुद्वयमेव कुत्र वर्त्तते इति प्रश्ने, पूर्व्ववद्गुरोरुपरि एकाङ्क १, द्वयाङ्क २ अध, तेन १, २, तत प्रथमलघोरुपरि त्रयाङ्क ३, द्वितीयलघोरुपरि पञ्चाङ्क ५, ततो गुरोरुपरि अष्टाङ्क ८, तदधस्त्रयोदशाङ्क [१३], तथाच लिपिक्रम १, २, ३, ५, ८ १३। प्रथमगुरोरुपरि एकाङ्क चरमगुरोरुपरि अष्टाङ्क

| | | |
|---|---|---|
| १ | ३ | ८ |
| ऽ | ऽ | ऽ |
| २ | ५ | १३ |

| | | | |
|---|---|---|---|
| १ | ३ | ५ | ८ |
| ऽ | । | । | ऽ |
| २ | | | १३ |

---

मिलित्वा नव, शेषभूते त्रयोदशाङ्के नवाङ्क ऊने कृते चतुरङ्कस्तिष्ठति, तेन एतादृशचतुर्थस्थानमिति वक्तव्यम। यदि तु षट्कलप्रस्तारे लघुषट्क कुत्रास्तीति प्रश्नस्तत्र पूर्ववदेकादित्रयोदशान्ता अङ्का देया, तत्र च गुरोरभावात गुरूपर्यङ्काभाव, तेन शेषाङ्के किमपि कर्त्तनीय नास्ति, तत शेषाङ्क एवावशिष्यते। तथाच षट्कलप्रस्तारस्य त्रयोदशस्थाने लघुषट्क पततीति वाच्यम । (C)।

| | | | | | |
|---|---|---|---|---|---|
| १ | २ | ३ | ५ | ८ | १३ |
| । | । | । | । | । | । |

३९ । निर्द्दिष्टप्रस्तारक्रमस्थितिनिर्द्धारितसख्याकगुरुलघुयुक्तत्व रूपनिर्णीतस्वरूपे भेदे प्रथमत्वद्वितीयत्वादिधर्मनिर्द्धारणमुद्दिष्ट। तद्द्विविध मात्रावर्णभेदात् । तत्र केनचित्कौतुकादवर्णोद्दिष्टे[?] पृष्टे तत्प्रकारमाह। पुब्व जुअलेति। पुब्व जुअल सरि अका — पूर्वयुगलसदृशाकान्, अत्र पूर्वपदस्य पूर्वाकपरत्वात् पूर्वयुगलेत्यस्य पूर्वांकयुगलेत्यर्थ । एव च पूर्वं यदकयुगल तत्सदृश तत्तुल्य तदैक्यक्रियया यत्सपद्यते इति यावत् तमकमित्यर्थ । दिज्जसु — ददस्व, अनिर्द्धारितप्रथमत्वद्वितीयत्वादिधर्मकभेदस्वरूप लिखित्वा तदक्षरोपरि पूर्वाकयुगलसदृशाक यथाप्रस्तारसख्य क्रमेणोत्तरोत्तर स्थापयेत्यर्थ । अत्र यत पूर्वाक एव नास्ति त[त] प्रथमातिक्रमे कारणाभावात् प्रथमोऽक स्थाप्य, यतश्च पूर्वम अकयुगल नास्ति तत्र यएव पूर्वाको भवति तद्द्विगुणिताक स्थाप्य इति गुरूपदेशोऽनुसधेय । तत गुरु सिर अकन्ह — गुरुशिरोऽकान् गुरो शिरसि ये अकास्तान्, सेस — शेषे सर्वातिमे अके, मिटिज्जसु — लोपय, गुरुशिरोऽकबोधितसख्या सर्व्वातिकाकबोधितसख्यायामूनीकुरु इति भाव । एव सति उबरल अक — उर्वरितमक गुरुशिरोऽक-

बोधितसल्लोपे सति सर्वांतिमाकमध्ये उर्वरितो योऽकस्तमित्यर्थ, सर्वांतिमाकबोधितसख्यामध्योर्वरितसख्याबोधकमकमिति यावत्। लेक्खिकदू — वप्रसख्या [?] परिधार्य्येति यावत्, आणङ्ग — आनयस्व जानीहि इति यावत, तहि पर — तदुपरि तेनेति यावत् मात्राणामिति शेष, उद्दिट्ठा — उद्दिष्टम, अनिर्द्धारितप्रथमलद्वितीयलादिधर्मे भेदे प्रथमलद्वितीयलादिधर्मनिर्द्धारण, धुअ — ध्रुव निश्चित, जाणङ्ग — जानीहि। अत्र गुरुशिर इति शिरपदोपादानात् गुरोरुपर्यधश्चाको देय इति सूच्यते, अन्यथा वर्णोद्दिष्टे लघूपरीतिवदत्रापि गुरोरुपरि इत्येव ब्रूयात्। लघोस्तु उपर्य्येवेति नियमो गुरूपदिष्टोऽनुसधेय। अयमर्थ — अनिर्द्धारितप्रथमलद्वितीयलादिधर्मभेदस्वरूप विन्यस्य प्रथमाक्षरोपरि एकत्व सख्याबोधकोऽक स्थाप्य, द्वितीयाक्षरोपरि च पूर्वाकद्वयाभावात् पूर्वस्थैकाकद्विगुणकल्पनानि पन्नो द्वितीयोऽंक स्थाप्य, तृतीयस्थाने च तत्पूर्वद्वितीयैकेत्यकद्वयैक्यक्रियानि पन्न तृतीयोऽक स्थाप्यश्चतुर्थस्थाने च तत्पूर्वतृतीयद्वितीयेत्यकद्वयैक्यक्रियानि पन्न पचमोऽक स्थाप्य, पचमस्थाने च तत्पूर्वपचमतृतीयेत्यकद्वयैक्यक्रियानि पन्नोऽष्टमोऽक स्थाप्य, षष्ठस्थाने च तत्पूर्वाष्टमपचमेत्यक द्वयैक्यक्रियानि पन्नस्त्रयोदशोऽक स्थाप्य। एव षट्सु स्थानेषु षडका यथाप्रस्तारसख्य षट्कलगणोद्दिष्टे स्थाप्या। एव पचकलादावपि यथाप्रस्तारसंख्यमका स्थाप्या'।

| | | |
|---|---|---|
| १ | २ | ८ |
| ऽ | ऽ | ऽ |
| २ | ५ | ११ |

एव च त्रिगुरु षट्कलस्य कतमो भेद इति पृष्टे, गुरुत्रय लिखित्वा तत्र एकद्वित्रिपचाष्टत्रयोदशेति

षडङ्कान् क्रमेण गुरूणामुपर्यधश्च सस्थाप्य गुरुशिरस्थैकतृतीयाष्टमेत्यकत्रयबोधितद्वादशसख्याया शेषाकत्रयोदशबोधितसख्यामध्यलोपे उर्वरिता एकलसख्या, एव च त्रिगुरु षट्कलस्य प्रथमो भेद इति वाच्यम्। एव यत्र लघुद्वयोत्तर गुरुद्वय पतति एतादृश षट्कलस्य कतमो भेद इति पृष्टे, पूर्वोक्तरीत्या यथास्थान षडकान् सस्थाप्य गुरुशिर स्थतृतीयाष्टमेत्यकद्वयैक्यक्रियानि पन्नैकादशाकबोधितसख्यायास्त्रयोदशसख्यामध्ये लोपे उर्वरिता द्विलसख्या, तथाचाय द्वितीयो भेद इति वाच्यम। एव यत्रादौ लघुगुरू ततोऽपि लघुगुरू एवभूत षट्कलस्य कतमो भेद इति पृष्टे, उक्तरीत्या उक्तस्थानेषु ततषडकस्थापने गुरुशिर स्थद्वितीयाष्टमेत्यकद्वयैक्यक्रियानि पन्नदशाकबोधितसख्यायास्त्रयोदशसख्यामध्ये लोपे अवशिष्टा त्रिलसख्या, तथाचाय तृतीयो भेद इति वाच्यम। एवमग्रेऽपि गुरुशिरोऽकसख्याया त्रयोदशसख्यामध्ये लुप्तोर्वरितसख्या तत्तद्भेदे वाच्या। षड्लघुरूपे गुरुशिरोऽकाभावादार्य्यसमाजसिद्धस्तादृशस्त्रयोदशो भेदो बोध्य।

| | | | |
|---|---|---|---|
| १ | २ | ३ | ८ |
| । | । | ऽ | ऽ |
| | | ५ | १३ |

| | | | |
|---|---|---|---|
| १ | २ | ५ | ८ |
| । | ऽ | । | ऽ |
| | ३ | | १३ |

| | | | | | |
|---|---|---|---|---|---|
| १ | २ | ३ | ५ | ८ | १३ |
| । | । | । | । | । | । |

एव पचकलप्रस्तारेऽपि अनिर्द्धारितप्रथमत्वद्वितीयत्वादिधर्मभेद लिखित्वा तद्वर्णोपरि एकद्वित्रिपचाष्टेत्यकपचक यथाप्रस्तारसख्य यथाक्रममुत्तरोत्तर स्थाप्यम। एव च यत्रादौ लघुस्ततो गुरुद्वयमीदृश पचकलस्य कतमो भेद इति पृष्टे, एकद्वित्रिपचाष्टेत्यकपचके तथोक्तस्थाने यथाक्रममुत्तरोत्तर संस्थापिते गुरुशिर स्थद्वितीयपचमेत्यकद्वयैक्यक्रियानि पन्नसप्तमांक-

| | | |
|---|---|---|
| १ | २ | ५ |
| । | ऽ | ऽ |
| | ३ | ८ |

बोधितसख्याया सर्वातिमाष्टमाकबोधितसख्यामध्यलोपे उर्वरिता एकलसख्या, एव चाय प्रथमो भेद इति वाच्यम। एव यत्र प्रथम गुरुलघू ततो गुरुरीदृशो भेद पचकलस्य कतम इति पृष्टे, एक-

| १ | २ | ५ |
|---|---|---|
| S | I | S |
| २ | | ८ |

द्वित्रिपचाष्टेत्यकपचके यथास्थान यथाक्रममुत्तरोत्तर स्थापिते गुरुभिर स्थैकपचमेत्यकद्वयमेव लब्ध, लब्ध-षष्ठसख्याया अष्टमसख्यामध्यलोपे उर्वरिता द्विलसख्या, तथाचाय द्वितीयो भेद इति वाच्यम्। एव यत्र लघुत्रयाते गुरुरीदृशो

| १ | २ | ३ | ५ |
|---|---|---|---|
| I | I | I | S |
| | | | ८ |

भेद कतम इति पृष्टे, पूर्वोक्तेऽकपचके तथैव स्थापिते गुरुभिर स्थपचमाकबोधितसख्याया सर्वा-तिमाष्टमाकबोधिताष्टमसख्यामध्यलोपे उर्वरिता त्रिलसख्या, तथा-चाय तृतीयो भेद इति वाच्यम। एवमग्रेऽपि गुरुभिरोऽकसख्या-यामष्टमसख्याया लुप्तोर्वरितसख्या तत्तद्भेदे वाच्या।

एव चतुःकले द्विगुरु कतमो भेद इति पृष्टे, एकद्वित्रि-

| १ | ३ |
|---|---|
| S | S |
| २ | ५ |

पचेत्यकचतुष्टये यथोक्तस्थाने यथाक्रममुत्तरोत्तर स्थापिते गुरुभिर स्थैकतृतीयेत्यकद्वयबोधितचतुर्थसख्याया सर्वा-तिमपचाकबोधितसख्यामध्यलोपे उर्वरिता एकलसख्या, तथाचाय प्रथमो भेद इति वाच्यम। एव चतुष्कले आदौ लघुद्वय ततो

| १ | २ | ३ |
|---|---|---|
| I | I | S |
| | | ५ |

गुरु ईदृशः कतमो भेद इति पृष्टे, उक्तरीत्योक्ताके स्थापिते गुरुभिर स्थतृतीयाकबोधितत्रिलसख्याया सर्वातिमपचमाकबोधितसख्यामध्यलोपे उर्वरिता द्विलसख्या, तथा-चाय द्वितीयो भेद इति वाच्यम्। एव त्रिकले एकद्वित्रीति अकत्रय, द्विकले एकद्वीत्यकद्वय सस्थाप्य वाच्यम। (E)

Here four entire leaves are missing in M S (E) —Ed

आसां णट्ठं ।[१]

णट्ठे सव्व[२]कला कारिज्जसु[३]
पुव्व[४]जुअल सरि अंका[५] दिज्जसु ।
पुच्छल[६] अंक[७] मिटावह[८] सेख[९]
अवरउ[१०] अंका[११] लुंपि[१२] कहु लेख[१३] ॥
जत्थ[१४] जत्थ[१४] पाविज्जइ[१५] भाग
एहु[१६] कहइ[१७] फुर[१८] पिंगल णाग ।
परमत्ता लेइ[१९] गुरुता[२] जाइ
जत लेक्खहु[२१] तत लेक्खहु[२२] आइ ॥ ४०[२३] ॥

---

४० । अथ मात्रानष्टमाह णट्ठेत्यादि । नष्टे सर्व्वा कला

---

४० । १ अथासां नष्ट (A), अथ मात्राया नष्ट (D) २ सव्व (B) सव (D) ३ करिज्जसु (B C & D) ४ पूर्व्व (B), dropt in (C) ५ सिर अका (D) ६ पूछल (A), पुछल (D) ७ अक (A & D), अङ्क (B & C) ८ मेटावह (A), मेटावहि (B) मेटावइ (C), मेटावऊ (D), मिट्टावहि (F) ९ सेस (A), सेक्ख (B & C) सेखा (D) १० उवरल (A, D & F) ११ अंक (A, B, C & D) १२ लुम्पि (B & C), लोप्पि (D), लोपि (F) १३ लेक्ख (B & C) १४ जच्छ (A) १५ पविज्जइ (B), पाइज्जइ (D) १६ एह (A) १७ भणइ (B & C) १८ फुल (B), फुड (F) The quadrant runs thus in (C) and (D) — एक भणइ पुन पिङ्गल नाग (C), कहइ फणइ पुणि पिगल णाग (D) १९ लइ (B & C), ले (F) २० गरुआ (B), गुरुआ (C) २१ लेक्खसि (B), लेक्खऊ (D & F) २२ Dropt in (C) २३ The name of the metre is not mentioned in any of the commentaries, neither does it agree with the definition of any metre described in the book —Ed

कुरुध्व, पूर्व्वयुगलसदृशानङ्कान् देहि, प्रश्नाङ्केन शेष लोपय, उद्वृत्त-मङ्क लोपयित्वा लिख, यत्र य प्राप्यते भाग एतज्जणति स्फुट पिगलनाग । परमात्रा गृहीत्वा गुरुता याति, यावल्लिख्यते ताव-ल्लेखश्चायाति । अमुकप्रस्तारस्यामुकस्थाने कीदृशो गणस्तिष्ठतीति प्रश्ने, तत्कथनाय नष्टशिष्टमुच्यते । नष्टे ज्ञातव्ये इति । तथाचाय प्रकार, षट्कलप्रस्तारस्य प्रथमस्थाने कीदृग्गणस्तिष्ठति इति प्रश्ने, सर्व्वा कला कर्त्तव्या भवन्ति । सर्व्वकलाकरणे च षड्लघव स्थाप-नीया, यथा ।।।।।।, तत्र च पूर्व्वयुगलसदृशाङ्कदान पूर्व्ववत्तेन लिपिक्रम १, २, ३, ५, ८, १३, अत्र च शेषाङ्के प्रश्नाङ्क[लो]प कर्त्तव्यो भवति, शेष त्रयोदशाङ्क, तत्र प्रश्नाङ्कस्यैकस्य लोपात् द्वादशाङ्कोऽवशिष्ट, तल्लोपेन गुरुलघवो लेख्या भवन्ति । पुन तल्लोपप्रका[र]श्चोच्यते द्वितीयश्लोकेन, तस्यायमर्थ प्रदर्श्यते । लोपा-वशिष्टो द्वादशाङ्क तस्य भाग प्राप्यते यैर्येरङ्कै, सोऽङ्को निर्व्वहति, तेषा परमात्रया सह गुरुता कर्त्तव्या, तथाहि प्रकृते च प्रथमकलाया-मेकाङ्कस्तृतीयकलाया त्रयाङ्क पञ्चकलायामष्टाङ्क इति मिलित्वा द्वादशाङ्क-निर्व्वाहस्तथाच एकाङ्क प्रथमकलाया तिष्ठति, सापि परमात्रया सह गुरुता गता, तथाच षट्कलप्रस्तारे त्रिगुरुगण इति लभ्यते । इदन्तु बोध्य प्रकारद्वयेनापि यत्रोद्वृत्ताङ्को निर्वहति, तत्र परमात्रया सह गुरुता न सम्भवति, स एवाङ्को नान्य । तथा हि षट्क[ल]प्रस्तारे पञ्चमस्थाने कीदृशो गण इति प्रश्ने, सर्व्वलघु-करण, पूर्व्वयुगलसदृशाङ्कदानञ्च पूर्व्ववत्तेन १, २, ३, ५, ८, १३ । अत्र च त्रयोदशाङ्के पञ्चमलोपेऽवशिष्टो भवति अष्टाङ्क स च पञ्च-

लघोरुपरि तिष्ठति, एकद्वित्रिपञ्चभिर्मिलिताभि सम्भवति, तत्र पञ्चमलघोरुपरि स्थिताङ्क एव गृह्यते, अन्यथा एकाङ्कस्य परमात्रया सह गुरुतापादने द्वयाङ्कस्याध स्थाङ्क एव नास्तीति तस्य गुरुतापादकत्वाभावात् तस्योपादानमनर्थकमापद्येत, इत्थञ्च पञ्चमषष्ठकलाभ्या मिलित्वा गुरुतापादने लघुचतुष्टयमेको गुरुश्च ।।।।ऽ पञ्चमस्थाने प[त]तीति वक्तव्यम । षट्कलप्रस्तारस्य त्रयोदशस्थाने कीदृग्गण इति प्रश्ने, त्रयोदशाङ्कस्य त्रयोदशाङ्कलोपे न किञ्चिदवशिष्यते, तेन गुरूकरणाभाव, तथाच सर्व्वलघुरेव शिष्यते |||||| (C)

४० । पद्य । नष्टे सर्वा कला कुरु, पूर्वयुगलसदृशानकान् देहि । पृष्टमङ्क लोपय शेषे उर्वरितमङ्क लुप्त्वा कथय लेख्ये ॥ यत्र यत्र प्राप्यते भाग एव कथयति स्फुट पिङ्गलनाग । परमात्रा गृहीत्वा गुरुता याति, यावल्लिख्यते तावल्लेख आयाति ॥ इद षट्कले दशमो भेद' कीदृगिति प्रश्ने योच्यते। तत्र सर्वकला |||||| पूर्ववदङ्किता, पृष्टाको दशम शेषे त्रयोदशाके ऊनित । शेषास्त्रय । तत्रावशिष्टाकेषु मध्ये तृतीय अङ्को लुप्त । यत्रेति कृते तृतीया कला चतुर्थया सह गुरुता याता ॥ऽ॥, अथ दशमो भेदो वक्तव्य । प्रथमद्वितीयरूपाकस्य लोपो न सभवति। प्रथममात्राया अग्रिममात्रया सह गुरुताया असभवात्, द्विरूपस्याकस्यापि भागस्थानीयत्वात् ॥ (G)

| १ | २ | ३ | ५ | ८ | १३ |
|---|---|---|---|---|---|
| । | । | । | । | । | । |

N B. In MS (D) the slokas here numbered ४५ to ४८ precede those numbered ४१ to ४४, and ५० precedes ४९ । -Ed

अह वसाणं उद्दिट्टं (C) ।[१]

अक्खर[२] उप्परि[३] दुखा
अंका दिज्जहु[४] मुण[णे]हु[५] उद्दिट्ठा[६] ।
लहु उप्परि[३] जो अंको
तं दइ[७] एक्केण जाणेहु ॥ ४१ ॥ [गाहा]

४१ । वर्णोद्दिष्टमाह । अचरोपरि द्विगुणानङ्कान् देहि उद्दिष्ट। लघोरुपरि योऽकस्त दत्त्वा एकेन जानीहि ॥ एकेन सह दत्त्वेत्यनेन तत्राङ्के एकेन सह मिश्रण कार्यमित्यर्थ । चतुरचरप्रस्तारे सर्व्वगुरु कुत्र वर्त्तते ऽऽऽऽ इति प्रश्ने, अचरोपरि द्विगुणा द्विगुणा अङ्का-देया, तथाच १ २ ४ ८ / ऽ ऽ ऽ ऽ अत्र लघोरभावात् लघूपरिस्थिता-कस्य एकेन मिश्रण [न] सम्भवति, किन्तु एकाङ्क एवावशिष्यते, तेन चतुरचरप्रस्तारस्य गुरुचतुष्क प्रथमत एव पततीति वक्तव्यम् । अपर दर्शयति, चतुरचरप्रस्तारस्याद्यन्तयोर्लघुद्वय मध्यस्थाने गुरुद्वय [कुत्र] पततीति १ २ ४ ८ / । ऽ ऽ । प्रश्ने, उत्तरोत्तर द्विगुणा अङ्का-देयास्तथाच तत्र लघूपरि एकाङ्कोऽष्टाकस्य इति मिलिला नव, तत्र चैकाङ्कयोजने कृते सति दशाङ्क सम्भवति, तेन द[श]मस्थान-इति वक्तव्यम् । चतुरचरप्रस्तारे सर्व्वलघु कुत्र वर्त्तते १ २ ४ ८ / । । । । इति प्रश्ने, द्विगुणा अङ्का देया, प्रथमलघोरुपरि एकाङ्क, ततो

४१। १ अथ वर्णानामुद्दिष्ट (A), अह वर्णाणमुद्दिट्ठ (B), अथ वर्णानां उद्दिष्ट (D), अथ वर्णोद्दिष्टम् (F) २ अचर (B & C) ३ उप्पर (A & D) ४ दिज्जइ (F) ५ मुनह (B), मुणइ (C), मुणह (D) मणमुणह (F) ६ उद्दिट्ठ (A & F), उद्दिट्ठा (D) ७ देइ (A & D), दृवि (B) In (F), after अंको in the last half मेइ सह्व करण आणेह ।

आसा गाट्टं ।[१]

गाट्टे अंके भाग[२] करिज्जसु

सम[३] भागहु[४] तहि[५] लहुअ[६] मुणिज्जसु[७] ।

बिखम[८] एक्क दे[९] बंठण किज्जसु

पिंगल जंपइ गुरु आणिज्जसु ॥ ४२ ॥ [अलिल्ला]

---

द्वयाङ्क, ततश्चतुरङ्क, ततोऽष्टाङ्क, एकेन सर्व्वाणि मिलित्वा षोड़श, षोड़शस्थाने पततीति वक्तव्यम् । (C)

४१ । अथ वर्णोद्दिष्टमाह अक्ख ॥ अक्षरोपरि द्विगुणानङ्कान्देहि, पश्चाज्जानीतोद्दिष्ट । लघूपरि योऽङ्क पतति सैक कृत्वा त जानीत ॥ उक्त चान्यच्च । उद्दिष्टे द्विगुणानाद्यादुपर्यङ्कान् समालिखेत् । लघुस्था ये तु तत्राङ्कास्तै सैकैर्मिश्रितैर्भवेत् ॥ इद चतुरक्षरे योज्यते ॥ यथाय भेद ।।ऽ। कतिथ इति प्रश्ने, द्विगुणाकदाने न्यास १ २ ४ ८ / । । ऽ । अत्र लघुस्थाङ्का एकद्व्यष्टरूपास्तेषा योग ११ एकादश, सैक १२ द्वादश, एतत्सङ्ख्योऽय भेद इति स्पष्टम् ॥ (G)

N B There is a process different from this in the Sanskrit work of Pingala, and its commentary by Halayudha Vide Society's Edition by Vishwanatha Sastri pp 233–234 The same result may be analytically arrived at vide Ghosha's Chhandah sara sangraha, Introduction, p xix para 46 —Ed

---

४२ । १ अथैवा नष्ट (A), अथ वर्णाना नष्ट (D) २ भाग (E) ३ सरि (B, C & F) ४ भाग्रह (B & C) भागे (D & F), भागहँ (E) ५ ते (A & D), तह (E) ६ लहु (B, C, D, E & F) ७ आणिज्जसु (B & C), बूणिज्जह (D & E) ८ विसम (D, E & F), विषम (C) ९ देइ (A, D & E), दइ (B & C)

४२। वर्णं [नष्ट] माह। नष्टाङ्के भाग कुरुष्व सदृशभागे तस्मिन् लघुमानयस्व। विषमे एक दत्त्वा वण्टन कुरुष्व पिङ्गलो जल्पति गुरुमानयस्व॥ नष्टे अदृष्टस्थाने प्रश्नेऽङ्कस्य भाग कर्त्तव्य। यत्र प्रश्नाङ्क समो भवति तत्र लघु स्थाप्य, तदर्द्धस्यापि समत्वे पुनरपि तदर्द्धं कृत्वा लघु स्थाप्य। एवमग्रेऽपि। विषमप्रश्नाङ्के वा [तु] गुरु स्थाप्य, तत्राङ्के चैक दत्त्वा भाग कार्य्य इति क्रम। उदाहरण यथा, चतुरक्षरप्रस्तारे कीदृक् प्रथमो गण इति प्रश्ने, प्रश्नाङ्क एकस्तस्य विषमत्वाद्गुरु स्थाप्य ऽ तत्र चैकाङ्के पुनरेकयोजने द्वयाङ्को जातस्तदर्द्धञ्चैक सोऽपि विषम तेन पुनरपि गुरुर्लेख्य, एवमग्रेऽपि गुरुरेवायातीति चतुर्गुरु ऽऽऽऽ प्रथमप्रस्तार इति वाच्यम्। एव चतुरक्षरजाते [प्रस्तारे] दशमस्थाने कीदृगिति प्रश्ने, दशाङ्कस्य समत्वादादौ लघु स्थाप्य, तदर्द्धे च कृते पञ्चाङ्क प्राप्तस्तस्य विषमत्वाद्गुरु स्थाप्य, तत्र च एकदाने षडङ्को भवति, तदर्द्धकरणे च त्रयाङ्को भवति, स च विषमो भवति इति पुनरपि गुरु स्थाप्य, त्रयाङ्के चैकयोजने चतुरङ्कस्तस्य च समत्वाल्लघु स्थाप्य।ऽऽ।, इत्थ चतुरक्षरप्रस्तारे दशमस्थाने आद्यावन्ते लघु मध्ये गुरुद्वयमस्तीति वक्तव्यम्। (C)

४२। अथ वर्णवृत्तभेदेषु नष्टप्रकारमाह णट्ठेति। अके समे विषमे वेत्यर्थ, भाअ — भाग, अर्द्धांशमिति यावत् यथाप्रस्तारसख्यमिति शेष, करिज्जसु — कुरुष्व कल्पयेति यावत, तत्र य सम भाअहँ — सम भाग समस्य भाग अर्द्धांश इत्यर्थ, तह — तत, लक्र — लघु मुणिज्जसु — जानीहि क[थ]येति यावत्,

बिसम — विषमसङ्ख्याकस्य एक — एकम एकत्वसङ्ख्याबोधकमङ्कमित्यर्थ, देइ — दत्त्वा सयोज्येति यावत, बठण — वटन भागमर्द्धांशमिति यावत्, किज्जसु — कुरुष्व कल्पयेति यावत्, वटनमिति भागकल्पने देशी, तत गुरु आणिज्जसु — गुरुमानय कल्पयेति यावत् । एवप्रकारेण वर्णवृत्तभेदानामिति शेष, णट्ठे — नष्ट नष्टप्रकारमिति यावत्, पिंगल जपइ — पिंगलो जल्पति कथयति ॥ समाङ्कभागे कृते योऽङ्क स लघुकल्पक, विषमाङ्कभागे योऽङ्क स गुरुकल्पक । विषमाङ्कस्य भागस्तु विषमाङ्कमेकेनाङ्केन संयोज्य कल्पनीय इति निर्गलितार्थ । अत्र यद्यपि एकाङ्केन योजितो विषम समभाव प्राप्नोति तथापि तस्य भाग विषमाङ्कभाग एवेति, ततो लघुकल्पनभ्रान्तिर्न कर्त्तव्येति ध्येयम । अयमर्थ —

एकाक्षरवृत्तस्य प्रथमो भेद कीदृश इति पृष्टे, एकाङ्के विषमे एकाङ्कयोजनेन कृतभागे एको गुरु कल्प्य । अनन्तर चाक्षराभावान्न कल्पना । एव च एकाक्षरवृत्तस्य प्रथमो भेद एकगुरुरिति वाच्यम् । एवमेकाक्षरवृत्तस्य द्वितीयो भेद कीदृश इति पृष्टे * * * कल्पनीय, अनन्तर चाक्षराभावान्न कल्पना, एकलघुर्द्वितीयो भेद इति वाच्यम् ।

एव द्व्यक्षरवृत्तस्य प्रथमो भेद कीदृश इति पृष्टे, पृष्टस्य एकाङ्कस्य विषमस्य एकाङ्कयोजनेन भागे एको गुरु कल्पनीय, पुनरपि भागलब्धस्यैकाङ्कस्य विषमस्य भा[गे] द्वितीयो गुरु कल्प्य । अनन्तर चाक्षराभावान्न कल्पना, एव द्विगुरुर्द्व्यक्षरवृत्तस्य प्रथमो भेद इति वाच्य. । एव द्वितीयो भेद कीदृश इति पृष्टे, पृष्टस्य

द्वितीयाकस्य समस्य भागे एको लघु कल्पनीयस्ततो भागलब्ध-स्यैकाकस्य विषमत्वादेकेन योजितस्य भागे एको गुरु कल्प्य, अनन्तर चाचराभावान्न कल्पना, एव च प्रथममेको लघुस्तत एको-गुरुरीदृशो द्व्यचरवृत्तस्य द्वितीयो भेद । एव द्व्यचरवृत्तस्य तृतीयो भेद कीदृश इति पृष्टे, पृष्टाकस्य तृतीयस्य विषमत्वादेकाकयोज-नेन भागे प्रथममेको गुरु कल्पनीयस्ततो भागलब्धस्य द्वितीया-कस्य समत्वाद्भागे एको लघु कल्प्य, अनन्तर चाचराभावान्न कल्पना, एव च यत्र क्रमेण गुरुलघू भवत ईदृशो द्व्यचरवृत्तस्य तृतीयो भेद इति वाच्यम । एव चतुर्थो भेद कीदृश इति पृष्टे, पृष्टाकस्य चतुर्थस्य समत्वात्तद्भागे प्रथम एको लघु कल्प्य, ततो-भागलब्धस्य द्वितीयाकस्यापि समत्वात्तद्भागेऽपि पुनरप्येको लघु कल्प्य, अनन्तर चाचराभावान्न कल्पना, एव च यत्र लघुद्वय स द्व्यचरवृत्तस्य चतुर्थो भेद इति वाच्यम् ।

एव त्र्यचरस्य प्रथमो भेद कीदृश इति पृष्टे, पृष्टाकस्य एकस्य विषमत्वादेकाकेन योजितस्य भागे एको गुरु प्रथम कल्प्य, ततो-भागलब्धस्यैकाकस्य विषमत्वादेकाकयोजनाद्वारद्वय भागे गुरुद्वय-कल्पनम्, अनन्तर चाचराभावान्न कल्पना, एव च यत्र गुरुत्रय-मीदृशस्त्र्यचरवृत्तस्य प्रथमो भेद इति वाच्यम् । एव त्र्यचरस्य द्वितीयो भेद कीदृश इति पृष्टे, पृष्टाकस्य द्वितीयस्य समत्वाद्भागे प्रथममेको लघु कल्प्यस्ततो भागलब्धस्यैकाकस्य विषमत्वादेकाक-योजनाद्वारद्वय भागे गुरुद्वय कल्पनीयमनन्तर चाचराभावान्न कल्पना, एव यत्र प्रथममेको लघुस्ततो गुरुद्वयमीदृशस्त्र्यचरस्य

द्वितीयो भेद इति वाच्यम्। एव त्र्यक्षरस्य तृतीयो भेद कीदृश इति [पृष्टे], पृष्टाकस्य तृतीयस्य विषमत्वादेकाकयोगेन भागकल्पने एकगुरु कल्प्यस्ततो भागलब्धस्य द्वितीयाकस्य समत्वात्तद्भागे लघु कल्प्यस्ततो भागलब्धस्य एकाकस्य विषमत्वादेकाकयोगेन तद्भागे गुरु कल्प्य, अनतर चाक्षराभावान्न कल्पना, एव च यत्र प्रथममेको-गुरुस्ततो लघुगुरू ईदृशस्त्र्यक्षरस्य तृतीयो भेद इति वाच्यम्। एव त्र्यक्षरवृत्तस्य चतुर्थो भेद कीदृश इति पृष्टे, पृष्टस्य चतुर्थाकस्य समत्वात्तद्भागे एको लघु कल्प्यस्ततो भागलब्धस्य द्वितीयाकस्यापि समत्वात्तद्भागेऽपि लघु कल्पनीय, ततो भागलब्धस्यैकाकस्य विषमत्वादेकाकयोगेन तद्भागे गुरु कल्पनीयस्ततश्चाक्षराभावान्न कल्पना, एव च यत्र प्रथम लघुद्वय तत एको गुरुरीदृशस्त्र्यक्षरवृत्तस्य चतुर्थो भेद इति वाच्यम्। एवमग्रेऽप्यूह्यम्।

एव चतुरक्षरस्य प्रथमो भेद कीदृश इति पृष्टे, पृष्टांकस्यैकस्य विषमत्वादेक दत्त्वा तद्भागे एको गुरु कल्पनीय, ततो-भागलब्धस्यैकाकस्य वारत्रयमेकाकयोजनेन भागे गुरुत्रय कल्पयित्वा चतुर्गुरुश्चतुरक्षर[स्य] प्रथमो भेद इति वाच्यम्। एव चतुरक्षरस्य द्वितीयो भेद कीदृश इति पृष्टे, पृष्टस्य द्वितीयाकस्य समत्वात्तद्भागे एको लघु कल्पनीयस्ततो भागलब्धस्यैकस्य विषमत्वादेकाक दत्त्वा वारत्रय भागकल्पने गुरुकल्पने गुरुत्रय कल्पनीयम, एव च यत्रादौ एको लघुस्ततो गुरुत्रयमीदृशश्चतुरक्षरस्य द्वितीयो भेद इति वाच्यम। एवमग्रेऽप्यूह्यम्। (E)

४२। पाठे। नष्टेऽके भाग कुरु, समे भागे [त] लघु जानीहि।

अह वसमेरु (B) ।[१]

अक्खर[२] संखे[३] कोट्ठ करु
आइ अंत पढमंक[४] ।
सिर दुइ अंके अवरु[५] भरु
सूई[६] मेरु णिसंक[७] ॥ ४३ ॥ दोहा ।

---

विषमे एक दत्त्वा भाग कुरु पिगलो जल्पति गुरुमानय ॥ नष्टस्याके समे लघुर्विषमे गुरुरित्यर्थ । इद चतुरचरे योज्यते । अत्र द्वादशो भेद कीदृगिति प्रश्ने, द्वादशाकस्य समत्वादाद्यो-लघु, तदर्द्धस्य षड़कस्यापि समत्वाद्द्वितीयोऽपि लघु, तदर्द्धस्य त्र्यकस्य विषमत्वाद्गुरु, सैकस्य तदर्द्धस्य द्व्यकस्य समत्वाल्लघु, तद्यथा ।।ऽ।, अय भेदो द्वादशसख्य इत्यर्थ । एव पचाचरादावपि बोध्यम् ॥ ४२ ॥ (G)

४३ । अथ वर्णमेरु । अचरसख्याया कोष्ठ कुरु, आद्यन्तेषु प्रथमोऽङ्क । शिरोद्वयाङ्केनापर बिभृहि सूचीमेरौ नि शङ्कम् ॥ एकाचरमारभ्य यावदचर छन्दसा चिकीर्षित भवति तावती पक्ति कर्त्तव्या । तत्र चाद्यावन्ते चैकाकदान कार्य, तेन प्रथमपक्तौ कोष्ठ-द्वयमेव । सूचीमेरुरिति समाख्याबलादादौ सूक्ष्मता, उत्तरोत्तर

---

४३ । १ अथ वर्णमेरु (A & E) २ अचर (B), अक्खर (D) ३ सख्य (B), सक्ये (C), सख (F) ४ पढमचक (B & F), भव after this (F) ५ अवर (D & E), जानज before सुई (F) ६ सुई (D & E) ७ णिसका (E), चीसक (F)

चाधिक्यमवगम्यते । तेन द्वितीयपङ्क्तौ कोष्ठत्रयमेवमेकैककोष्ठवृद्ध्या लेख्यम् । तत्र चायमङ्कदानप्रकार, — सर्व्वत्रैव पङ्क्तौ आदावन्ते च

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| एकवर्णमेरुपङ्क्ति | १ | १ | २ | | | | | | | | |
| द्विवर्णमेरुपङ्क्ति | १ | २ | १ | ४ | | | | | | | |
| त्रिवर्णमेरुपङ्क्ति | १ | ३ | ३ | १ | ८ | | | | | | |
| चतुर्वर्ण ,, | १ | ४ | ६ | ४ | १ | १६ | | | | | |
| पञ्चवर्ण ,, | १ | ५ | १० | १० | ५ | १ | ३२ | | | | |
| षड्वर्ण ,, | १ | ६ | १५ | २० | १५ | ६ | १ | ६४ | | | |
| सप्तवर्ण ,, | १ | ७ | २१ | ३५ | ३५ | २१ | ७ | १ | १२८ | | |
| अष्टवर्ण ,, | १ | ८ | २८ | ५६ | ७० | ५६ | २८ | ८ | १ | २५६ | |
| नववर्ण ,, | १ | ९ | ३६ | ८४ | १२६ | १२६ | ८४ | ३६ | ९ | १ | ५१२ |

एकाङ्को देय, रिक्तकोष्ठकानाञ्च उपरिस्थिताङ्कद्वयेन पूरण कार्यं । तथाहि प्रथमकोष्ठे तावद्रिक्तकोष्ठाभाव । द्वितीयपङ्क्तौ मध्यगृह रिक्तमस्ति, तच्च तदुपरिस्थिताङ्कद्वयेन पूरणीयमत्र च उपरि एकाङ्कद्वयसत्त्वात् मिलित्वा द्वयाङ्को निष्पद्यते, अत स तत्र लेख्य । तृतीयपङ्क्तौ रिक्तगृहद्वय, तत्र च प्रथमगृहोपरि एकाङ्को द्वयाङ्कस्चेति मिलित्वा त्रयाङ्क इति स तत्र लेख्य, द्वितीयस्योपरि [एकाङ्क] द्वयाङ्कस्चेति मिलित्वा त्रयाङ्को जात स तत्र लेख्य, एवमग्रेऽपि ।

अथ मेरो प्रयोजनमुच्यते । प्रथमपङ्क्तावाद्यन्तयोरेकाङ्कसत्त्वाद्द्वय निष्पन्न, तेन एकाक्षरजातौ प्रस्तारद्वयमिति लभ्यते । तत्र प्रथममेकाङ्कसत्त्वात्सर्व्वगुरुरेक, परतस्चैकाङ्कसत्त्वात्सर्व्वलघुरप्येक । द्वितीयपङ्क्तौ च मिलित्वा चतुरङ्कसत्त्वाद् द्व्यक्षरजातौ प्रस्तारचतुष्टयम्, आदावेकाङ्कसत्त्वात्सर्व्वगुरुरेक, द्विती[ये] द्वयाङ्कसत्त्वा-

देकगुरुद्वयम अङ्के[न्ते] च एकसत्त्वात्सर्व्वलघुरेक । एव तृतीयपङ्क्तौ च मिलित्वा अष्टाङ्को निष्पन्न, तेन त्र्यचरजातौ प्रस्ता[रा]-ष्टकम, एक सर्व्वगुरु, एक सर्व्वलघु, त्रिगुरुद्वय, त्रिरेकगुरु, एवमग्रेऽपि बोद्धव्यम ॥ (८)

४३ । अमुकवर्णवृत्तमात्रागणप्रस्तारयोरेतावद्गुरुलघुको भेद कतिसख्याक इति अनिर्द्दिष्टक्रमस्थितिनिर्द्धारितसख्याकगुरुलघु-युक्तलरूपप्रस्तारनिर्णीतस्वरूपाऽनिर्द्धारितसख्याकभेदनिष्ठाया एको द्वावित्यादिपिण्डीभूतैकत्वद्वित्वादिकाया निखिलवर्णवृत्तमात्रागण-भेदनिष्ठायाश्च पिण्डीभूतद्विचतुरष्टषोडशेत्यादिकाया सख्याया-निर्द्धारककोष्ठस्थाकसमूहो वा मेरु । अत्र निखिलभेदनिष्ठपिण्डी-भूतद्वित्वचतुष्ट्वादिसख्यानिर्द्धारण तत्तन्मेरुपङ्क्तिनिखिलकोष्ठवर्त्यङ्क-योजननिष्पन्नाङ्केन बोध्यमिति गुरूपदेशोऽनुसधेय । पूर्ववद्द्विविधे, तत्र वर्णमेरुप्रकारमाह । अक्खरसखेति । अक्खर सखे—सख्याता-चराणाम । अत्राचरपदस्य चरणाचरपादत्वात्सख्यातचरणाचराणा-मित्यर्थ । सख्यातानि एकादिषड्विंशतिपर्यंतसख्यायुक्तानि चरणा-चराणि येषा तेषा वृत्तानामिति निर्गलितार्थ । कोट्ठ—कोष्ठानि गुरूपदेशादिति शेष, करु—कुरु । एकाचरचरणवृत्तस्य कोष्ठद्वय, द्व्यचरचरणवृत्तस्य कोष्ठत्रय, त्र्यचरचरणवृत्तस्य कोष्ठ[चतुष्टय], चतुर-चरचरणवृत्तस्य कोष्ठपचकमित्येव गुरूपदेशादुत्तरोत्तरैकैकवृद्ध्या एकाचरमारभ्य षड्विंशत्यचरपर्यंत कोष्ठानि कल्पयेति निर्गलितार्थ । तषु आइ अत—आद्यतयो कोष्ठयो, पढमक—प्रथममकमेकत्व-सख्यावोधकमकमिति यावत्, देहीति शेष । अवर—अपर आद्य-

तातरालस्थितमिति यावत कोष्ठक, सिर दुइ अंके — शिरोऽङ्कद्वयेन, अवहट्टभाषाया पूर्व्वनिपातानियमात, भरु—पूरय पूरणीयकोष्ठ-शिरःस्थाङ्कद्वययोजननिष्पन्नाङ्केनाद्यतातराल स्थित कोष्ठ पूरणीय-मित्यर्थ । एवम्प्रकारेणेति शेष, मेरु—मेरु, णिसक—नि शङ्क निश्चयेनेति यावत्, सूई—सूच्यते निर्मीयते इति योजना ।

अथैतन्निर्माणप्रकारो लिख्यते । प्रथम वामदक्षिणयोरेकाङ्गुल-मायतमूर्द्धाधोरेखाद्वय विनिर्माय तत्पार्श्वयो ऋजुरेखया मेल नीयमेवमेक दीर्घ कोष्ठ विधाय तत्र ऊर्द्धरेखामध्यदेशमारभ्याधो-रेखामध्यदेशपर्यंतमेकामृजुरेखा दत्त्वा कोष्ठद्वय कल्पनीय, तत्र तत्र प्रत्येकमेकैकोऽङ्को देय, तत्र प्रथममिद मेरुस्वरूप प्रथमकोष्ठस्थै-काङ्केन एकवर्णवृत्त एकगुरुरेको भेद , द्वितीयकोष्ठस्थैकाङ्केन च एक-लघुरेको भेद इति निर्द्धारितैकलसङ्ख्याकगुरुलघुयुक्तलरूपनिर्णीत-स्वरूपैकवर्णभेदनिष्ठैकलसङ्ख्या प्रतीयते । कोष्ठद्वयस्थैकाङ्कद्वयपरस्पर-योजननिष्पन्नद्वितीयाङ्केन चैकवर्णवृत्तभेदस्य द्विलरूपा समस्ता सङ्ख्या प्रतीयते, इतीय कोष्ठद्वयात्मिका प्रथमा एकवर्णमेरुपङ्क्ति ।

एवमेतत्पङ्क्त्यधोरेखा पार्श्वयोर्मनागवर्द्धयित्वा अङ्गुष्ठमात्र मध्यदेश त्यक्त्वा अधस्तादेका रेखा उपरितनरेखासमाना कार्या, पार्श्वयोश्च ऋजुरेखया मेलन कार्यमेवमेकमायत कोष्ठ विधाय तत्र उपरि-तनप्रथमकोष्ठस्याधोरेखामध्यदेशमारभ्याधस्तनरेखापर्यंतमेका ऋजु-रेखा देया, तत द्वितीयकोष्ठाधोरेखामध्यमारभ्याधस्तनरेखापर्यंत-मेका ऋजुरेखा देया, एव कोष्ठत्रय सपाद्य प्रथमान्त्यकोष्ठयो प्रत्येकमेकैकोऽङ्को देय, अतरालवर्त्ती च द्वितीय कोष्ठ शिर-

स्यैकाकद्वययोजननिष्पन्नद्वितीयाकेन पूरणीय, तत्र द्व्यक्षरवृत्तभेदेषु द्विगुरुरेको भेद इति निर्द्धारितद्वित्वसंख्याकगुरुयुक्तद्व्यक्षरवृत्तभेदनिष्ठैकत्वरूपसंख्या प्रथमकोष्ठस्यैकाकेन प्रतीयते। ततो-द्वितीयकोष्ठस्थद्वितीयाकेन द्व्यक्षरस्यैकगुर्वेकलघुयुक्तौ द्वौ भेदाविति निर्द्धारितैकत्वसंख्याकगुरुलघुयुक्तद्व्यक्षरभेदनिष्ठद्वित्वरूपसंख्या प्रतीयते। ततस्तृतीयकोष्ठस्यैकाकेन द्व्यक्षरस्य द्विलघुरेको भेद इति निर्द्धारितद्वित्वसंख्याकलघुयुक्तद्व्यक्षरभेदनिष्ठैकत्वरूपसंख्या प्रतीयते। कोष्ठत्रयस्थसमस्ताकयोजननिष्पन्नचतुर्थाकेन च चतुष्टरूपा समस्तभेदसंख्या निश्चीयते, सेयं कोष्ठत्रययुक्ता द्व्यक्षरमेरुपङ्क्तिर्द्वितीया।

एवमेतत्पङ्क्त्यधोरेखा पार्श्वयोर्मनाग्वर्द्धयित्वैकाङ्गुलमात्रमध्यदेशं त्यक्त्वोपरितनरेखासमानाधस्ताद्रेखा कार्या, पार्श्वयोश्च ऋजुरेखया मेलनं कार्यमेवमेकं दीर्घं कोष्ठं निमाय तत्र उपरितनप्रथमकोष्ठाधोरेखामध्यदेशमारभ्याधोरेखापर्यन्तमेका ऋजुरेखा देया, ततो द्वितीयकोष्ठाधोरेखामध्यमारभ्याधोरेखापर्यन्तमेका ऋजुरेखा देया, ततस्तृतीयकोष्ठाधोरेखामध्यमारभ्याधोरेखापर्यन्तमेका ऋजुरेखा देया, एवं कोष्ठचतुष्टयं संपाद्य तत्राद्यन्तकोष्ठयोः प्रत्येकमेकैकोऽङ्को देयस्तदन्तरालस्थद्वितीयकोष्ठस्य च तच्छिरःस्थैकद्वितीयेत्यङ्कद्वययोजननिष्पन्नतृतीयाकेन पूरणं कार्यं, तृतीयकोष्ठस्य च तच्छिरःस्थद्वितीयैकेत्यङ्कद्वययोजननिष्पन्नतृतीयाकेन पूरणं कार्यं, तत्र प्रथमकोष्ठस्यैकाकेन त्र्यक्षरस्य त्रिगुरुरेको भेद इति निर्द्धारितत्रित्वसंख्याकगुरुयुक्तत्र्यक्षरवृत्तभेदनिष्ठैकत्वरूपसंख्या प्रतीयते। द्वितीयकोष्ठस्थतृतीयाकेन च त्र्यक्षरस्य द्विगुर्वेकलघुयुक्त भेदत्रय-

मिति निर्द्धारितद्विलैकलसख्याकगुरुलघुयुक्तत्र्यचरभेदनिष्ठत्रिलरूप-सख्या निश्चीयते। एव तृतीयकोष्ठस्थतृतीयाङ्केन [त्र्य]चरस्यैकगुरु-द्विलघुयुक्त भेदत्रयमिति निर्द्धारितैकलद्विलसख्याकगुरुलघुयुक्त-त्र्यचरभेदनिष्ठक[त्रिल]रूपसख्या निश्चीयते। एव चतुर्थकोष्ठस्यैका-ङ्केन त्र्यचरस्य त्रिलघुयुक्त एको भेद इति निर्द्धारितत्रिलसख्याक-लघुयुक्तत्र्यचरभेदनिष्ठैकलरूपसख्या प्रतीयते। कोष्ठचतुष्टयस्थसर्वाङ्क-योजननिष्पन्नाष्टमाङ्केन च त्र्यचरस्याष्टौ भेदा इति समस्ता त्र्यचर-वृत्तभेदसख्या निश्चीयते, सेय तृतीया कोष्ठचतुष्टययुक्ता तृती-याचरमेरुपङ्क्ति।

एव पूर्वोक्तरीत्यैक दीर्घ कोष्ठ निर्माय तत्र कोष्ठपञ्चक विधाय प्रथमान्त्ययो कोष्ठयोरेकैको देय, अन्तरालस्थस्य द्वितीयकोष्ठस्य शिर स्थैकतृतीयैत्यकद्वययोजननिष्पन्नचतुर्थाङ्केन पूरण विधेय; तृती-यकोष्ठस्य च शिर स्थतृतीयाङ्कद्वययोज[न]निष्पन्नषष्ठाङ्केन पूरण विधेय, चतुर्थकोष्ठस्य च शिर स्थतृतीयैकेत्यकद्वययोजननिष्पन्नचतु-र्थाङ्केन पूरण विधेय, तत्र प्रथमकोष्ठस्यैकाङ्केन चतुरच[र]वृत्तस्य चतुर्गुरुरेको भेद इति निर्द्धारितचतुष्टसख्याकगुरुयुक्तचतुरचरवृत्त-भेदनिष्ठैकलसख्या प्रतीयते। द्वितीयकोष्ठस्थचतुर्थाङ्केन च चतुरचरस्य त्रिगुर्वेकम[ल]घुयुक्त भेदचतुष्टयमिति निर्द्धारितत्रिलैकलसख्याक-गुरुलघुयुक्तचतुरचरभेदनिष्ठचतुष्टरूपसख्या प्रतीयते। ततस्तृतीय-कोष्ठस्थषष्ठाङ्केन चतुरचरस्य द्विगुरुद्विलघुयुक्ता षड्भेदा इति निर्द्धारितद्विलसख्याकगुरुलघुयुक्तचतुरचरभेदनिष्ठषट्सख्या प्रती-यते। तत चतुर्थकोष्ठस्थचतुर्थाङ्केनैकगुरुत्रिलघुयुक्त चतुरचरस्य भेद-

चतुष्टयमिति निर्द्धारितेकलत्रिलसंख्याकगुरुलघुयुक्तचतुरक्षरभेदनिष्ठचतुष्टय[रू]पसंख्या निश्चीयते। तत पञ्चमकोष्ठस्थैकाकेन चतुर्लघुयुक्तश्चतुरक्षरस्यैको भेद इति निर्द्धारितचतुष्टसंख्याकलघुयुक्तचतुरक्षरभेदनिष्ठैकलरूपसंख्या निश्चीयते। कोष्ठपञ्चकनिष्ठसर्वाकयोजननि पन्नषोडशाकेन च षोड़शरूपा समस्ता चतुरक्षरभेदसंख्या प्रतीयते, सेय पञ्चकोष्ठयुक्ता चतुर्थी चतुरक्षरमेरुपङ्क्ति ।

एव पूर्वोक्तरीत्या एक दीर्घं कोष्ठ विधाय तत्र कोष्ठषट्क निर्माय प्रथमात्यकोष्ठयोरेकैकोऽको देय, अतरालस्थद्वितीयकोष्ठस्य शिर स्थैकचतुर्थत्यकद्वययोजननि पन्नपञ्चमाकेन पूरण विधेय। ततस्तृतीयकोष्ठस्य शिर[ ]स्थचतुर्थषष्ठेत्यकद्वययोजननि पन्नदशमाकेन पूरण विधेय। ततश्चतुर्थकोष्ठस्य शिर स्थषष्ठचतुर्थत्यकद्वययोजननि पन्नदशमाकेन पूरण विधेय। तत पञ्चमकोष्ठस्य शिर स्थचतुर्थैकेत्यकद्वययोजननि पन्नपञ्चमाकेन पूरण विधेय। तत्र प्रथमकोष्ठस्यैकाकेन पञ्चाक्षरवृत्तस्य पञ्चगुरुरेको भेद इति निर्द्धारितपञ्चलसंख्याकगुरुयुक्तपञ्चाक्षरभेदनिष्ठैकलसंख्या निश्चीयते। तत द्वितीयकोष्ठस्थपञ्चमाकेन च पञ्चाक्षरवृत्तस्य चतुर्गुर्वेकलघुयुक्त भेदपञ्चकमिति निर्द्धारितचतुष्टैकलसंख्याकगुरुलघुयुक्तपञ्चाक्षरभेदनिष्ठपञ्चलसंख्या निश्चीयते। ततस्तृतीयकोष्ठस्थदशमाकेन पञ्चाक्षरवृत्तस्य त्रिगुरुद्विलघुयुक्त भेददशकमिति निर्द्धारितत्रिलद्विलसंख्याकगुरुलघुयुक्तपञ्चाक्षरभेदनिष्ठदशलसंख्या नी[नि]श्चीयते। ततश्चतुर्थकोष्ठस्थदशमाकेन पञ्चाक्षरवृत्तस्य द्विगुरुत्रिलघुयुक्त भेददशकमिति निर्द्धारितद्विलत्रिलसंख्याकगुरुलघुयुक्तपञ्चाक्षरभेदनिष्ठ-

द्यङ्कलसंख्या निश्चीयते । ततः पञ्चमकोष्ठस्थपञ्चमाङ्केन पञ्चाक्षरवृत्तस्य एकगुरुचतुर्लघुयुक्त भेदपञ्चकमिति निर्द्धारितैकलचतुष्कसंख्याकगुरुलघुयुक्तपञ्चाक्षरभेदनिष्ठपञ्चलसंख्या निश्चीयते । ततः षष्ठकोष्ठस्थैकाङ्केन पञ्चाक्षरवृत्तस्य पञ्चलघुयुक्त एको भेद इति निर्द्धारितपञ्चलसंख्याकलघुयुक्तभेदनिष्ठैकलसंख्या निश्चीयते । कोष्ठषट्कनिष्ठसर्वाङ्कयोजननिष्पन्नद्वात्रिंशत्तमाङ्केन च द्वात्रिंशद्रूपा समस्ता पञ्चाक्षरवृत्तभेदसंख्या प्रतीयते । एवमग्रेऽपि सुधीभिः स्वयमूह्य, ग्रन्थविस्तरभयान्न लिख्यते ॥ (E)

४२ । अथ कियन्तः सर्वगुर्वेकगुरु-द्विगुरु-त्रिगुर्वादयः, एवं कियन्तः सर्वलघ्वेकलघु-द्विलघ्वादय इति ज्ञानार्थं मेरुमाह, अक्खर । अक्षरसंख्यया कोष्ठान् कुरु, आद्यमन्त्यं च प्रथमाङ्केन पूरय । शीर्षद्वयाङ्केनापरं भर, जानीत सूचीमेरुं निःशङ्कम ॥ आद्यं कोष्ठमिति शेषः, तथाच सर्वत्र आद्यान्त्यकोष्ठयोरेक एव लेख्यः, शीर्षकोष्ठद्वयरूपाङ्केन रिक्तकोष्ठं पूरयेत्यर्थः । तथाच एकाक्षरादौ दृष्टमेरुसंख्यया द्व्यादिकोष्ठानर्द्धान्तरितानेकैकवृद्ध्या लिखेत् । तत्र सर्वकोष्ठाद्यन्तयोरेकं दत्त्वा पश्चादुपरितनं कोष्ठद्वयाङ्कं शृङ्खलावबन्धन्यायेनैकीकृत्याऽवशिष्टाः कोष्ठाः प्रपूरणीयाः ॥ तत्र एकाक्षरप्रस्तारे एकः सर्वगुरुः, एकः सर्वलघुरिति भेदद्वयमेव सिद्धं, तस्य द्विभेदत्वात् । द्व्यक्षरप्रस्तारे एकः सर्वगुरुः, द्वौ एकगुरू, एकः सर्वलघुरिति ॥ एवं त्र्यक्षरप्रस्तारे एकः सर्वगुरुः, त्रय एकगुरवः, त्रयो द्विगुरवः, एकः सर्वलघुरिति ॥ एवं सर्वत्र प्रस्तारे एकः सर्वलघुः, त्रय एकलघवः, त्रयो द्विलघवः, एकः सर्वगुरुरित्यादि सर्वत्र

## अह अस्स पताका।[1]

उद्दिट्ठा[2] सरि अंका दिज्जसु
पुव्व[3] अंक पर भरण करिज्जसु[4]।
पाबल[5] अंक पढम[6] परिदिज्जसु[7]
पत्थर[8] संख[9] पताका किज्जसु[10] ॥ ४४[11] ॥ [अलिल्ला]

---

बोध्यम। अत्राङ्कयोगेन सङ्ख्या भवति। यथा एकाक्षरे द्वौ २, द्व्यक्षरे चत्वार ४, त्र्यक्षरेऽष्टौ ८, चतुरक्षरे षोडशेत्यादि। अत्रेदमवधेयम। अपचयमाना गुरव पद्ये मेरौ तु यस्य दृश्यते। सर्वत्राशाभगो विपरीते वाञ्छित लभते॥ अत्र प्रस्तारात्कियत्सङ्ख्योऽयं भेद इति ज्ञात्वा कियद्गुरुकोऽयमित्यवधार्य्य फल वदेदिति ॥४४॥ (G)

४४। अथ वर्णपताकामाह। उद्दिष्टसदृशानङ्कान देहि, पूर्व्वाङ्केन परभरण कुरु। प्राप्ताङ्क प्रथमपरतो दीयते, प्रस्ता[र]सङ्ख्यया पताका क्रियते॥ अयमर्थ,—वर्णोद्दिष्टे यथा अङ्का दत्तास्तथैवाङ्का देया, एतावान् विशेष अ[त]त्रोद्दिष्टप्रस्तारे उत्तरोत्तरद्विगुणा अङ्का दीयन्ते, अत्र तूत्तरोत्तरद्विगुणाङ्कस्थापनमात्र, तत्र चाङ्कस्य वामा गतिरिति न्यायेन चरमाङ्क एव पूर्व्वाङ्क प्रथमत एव स्थापनीय, स एकगुरुकस्थान, तेनाङ्केन सह तत्पराङ्कस्य भरण—योजन

---

४४। १ अथ पताका (A), अथ वर्णपताका (D & E) २ उद्दिट्ठ (F) ३ पूव्वके (B), पूर्व्व (C) ४ किज्जसु (E) ५ पावल (B & C), पाउल (F) ६ पर (B & C) ७ तिज्जसु (D) तेज्जसु (F & E) ८ पच्छर (A), पत्थार (E & F) ९ सखे (A, B & C) १० करिज्जसु (B & C), लिक्खसु (F) ११ ४५ (F)

कार्य्यं, पूर्व्वाङ्क एवात्र पराङ्क उच्यते, अङ्कस्य वामा गतिरित्युक्तत्वात् । एवमपराङ्केण सह योजन, ततस्तत्पराङ्केण प्राप्तास्त्वङ्का अधोऽध स्थाप्या, एवमेकगुरोर्द्वितीया पङ्क्ति कार्य्या, तत्र च प्रथमलिखिताङ्कपृष्ठतो योऽङ्क स उपरि लेख्य, ततस्य उपरिस्थिताङ्केन सह योजयित्वाऽधो लेख्य, पुनस्तत्पूर्व्वस्थिताङ्केन सह योजयित्वा । एव द्विगुरुपङ्क्ति समाप्य त्रिगु[रु]पङ्क्तिर्लेख्या, द्विगुरूपरिस्थिताङ्कपृष्ठस्थाङ्क उपरि स्थाप्यस्तत्पृष्ठस्थाङ्केन सह योजयित्वा तदधो लेख्य', पुन पराङ्केण योजयित्वा तदधो लेख्य । एवमग्रेऽपि परतोदीयते इत्यस्याधो लिख्यत इत्यर्थ इति गुरूपदेश । उत्तरोत्तरद्विगुणा अङ्का कियद्दूर देया इत्याकाङ्क्षायामुक्त प्रस्तारसख्ययेत्यादि, तेन यावदक्षरस्य प्रस्तारस्तावत्पर्य्यन्त द्विगुणाङ्कदान, तावत्पङ्क्तिपताका भवतीति बोध्यम् । यत्तु यावती प्रस्तारसख्या तावदङ्का देया इत्यर्थ इति तन्न, पताकाया यावदङ्कासम्भवात्, तत्र एकन्यूनाङ्कस्यैव सम्भवात ।

अथोदाहरणेन स्पष्टीक्रियते। चतुरक्षरप्रस्तारे एकगुर्वादय' कुत्र पतन्तीति प्रश्ने, चतुर्षु स्थानेषु उत्तरोत्तरद्विगुणा अङ्का स्थाप्या यथा १,२,४,८, तत्र चैकगुरुपङ्क्तौ प्रथमतोऽष्टाङ्क स्थाप्य, अष्टाङ्कचतुरङ्कयोजनाद्द्वादशाङ्क स तदध स्थाप्य' १२, द्वादशाङ्कद्वयाङ्कयोजनाच्चतुर्द्दशाङ्क: स तदधो लेख्य १४, चतुर्द्दशैकाङ्कयोजनात्पञ्चदशाङ्क स तदधो लेख्य' १५, एवमेकगुरुकस्यैका पङ्क्ति । अथ द्विगुरुकपङ्क्तौ अष्टाङ्कपृष्ठवर्त्ती

| १ | २ | ४ | ८ | |
|---|---|---|---|---|
| १ | २ | ४ | | १६ |
| | ३ | ६ | १२ | |
| | ५ | ७ | १४ | |
| | ९ | १० | १५ | |
| | | ११ | | |
| | | १३ | | |

चतुरङ्क उपरि लेख्य, चतुरङ्के द्वयाङ्कयोजनात षडङ्क ६, स तदधो लेख्य षडङ्कैकाङ्कयोजनात सप्ताङ्क ७, स तदधो लेख्य, तत पूर्व्वाङ्केणापि सह योग कृत्वा लेख्य भवति, तत्र चतुरङ्कस्य पूर्व्वाङ्कोऽष्टाङ्कस्तेन चतुरङ्कयोगाद्द्वादशाङ्क, स पूर्व्वलिखितत्वान्न लिख्यते, एव चतुर्द्दशाङ्कपञ्चदशाङ्कावपि पूर्व्वलि[खि]तौ, तेनाष्टाङ्के द्वयाङ्कयोगाद्दशाङ्क १०, स तदधो लेख्य, ततो दशैकाङ्कयोगादेकादशाङ्क [११], स तदधो लेख्य, पुनश्चाष्टाङ्कचतुरङ्कैकाङ्कयोगात्त्रयोदशाङ्क १३, स तदधो लेख्य, इति द्विगुरुकपङ्क्ति।

अथ द्वि[त्रिगु]रुकपङ्क्ति, तत्र चतुरङ्कपृष्ठवर्त्ती द्वयाङ्क उपरि लेख्य, द्वयाङ्कैकाङ्कयोगात्त्रयाङ्क, स तदधो लेख्य, ततश्चतुरङ्कद्वयाङ्कयोगात् षडङ्क, स पूर्व्वलिखित, तेन चतुरङ्कैकाङ्कयोगात्पञ्चाङ्क ५, स तदधो लेख्य, ततश्चाष्टाङ्कचतुरङ्कयोगात् यो द्वादशा[ङ्को] जात स पूर्व्वलिखित एव, तेनाष्टाङ्कैकाङ्कयोगान्नवाङ्क ९, स तदधो लेख्य इति त्रिगुरुकपङ्क्ति।

अथ चतुर्गुरुकपङ्क्तौ द्वयाङ्कपृष्ठवर्त्ती एकाङ्कोऽपि लेख्य १, ततश्चात्याङ्कयोगात् येऽङ्कास्ते पूर्व्वलि[खि]ता एव, तेन तदधोऽङ्कान्तर न लिख्यते।

तेन चतुरक्षरप्रस्तारस्याष्टमद्वादशचतुर्द्दशपञ्चदशेषु एकगुरु, चतुर्थषष्ठसप्तमदशमैकादशत्रयोदशेषु द्विगुरु। द्वितीय[तृ]तीयपञ्च[म]नवमेषु त्रिगुरु। प्रथमतश्चतुर्गुरुरिति ज्ञेयम्। षोड़शाङ्कस्य लिखनात् तत्र गुरुर्नास्ति, किन्तु सर्व्वलघुरिति ज्ञायते॥ (C)

४४। अमुकवर्णमात्राप्रस्तारयोरेतावद्गुरुलघुयुक्तो भेद एतावत्स-

स्थक इति मेरुपङ्क्तिवर्त्तितत्तत्कोष्ठस्थाङ्कनिर्द्धारितस्वरूपसख्याकाना भेदाना प्रथमद्वितीयादिप्रातिस्विकरूपस्य निर्द्धारण तन्निर्द्धारकाक-समूहो वा पताका, सा द्विविधा वर्णपताका मात्रापताका चेति ।

वर्णपताकानिर्माणप्रकारमाह उद्दिट्ठा सरि अकेति । उद्दिट्ठा सरि — उद्दिष्टसदृशान् उद्दिष्टपदस्योद्दिष्टाङ्कपरत्वादुद्दिष्टाङ्कसदृशा-नित्यर्थ, अक — अङ्कान्, दिज्जसु — देहि, प[पू]र्वमेकमक दत्त्वा उत्तरोत्तर द्विगुणितान् द्विचतुरष्टादिकानङ्कान् यथाप्रस्तारसख्य स्थापयेदित्यर्थ, तत पुब्ब अक — पूर्वाङ्कस्य, पर — परस्मिन्नुत्तर-वर्त्तिनीति यावत् अङ्के इति शेष, पत्थरसख — प्रस्तारसख्य प्रस्ता-रस्य सख्या यस्या क्रियाया तद्यथा स्यात्तथेत्यर्थ, भरण — योजन करिज्जसु — कुरु । यस्य पूर्वाङ्कस्य यत्पराङ्कयोजने प्रस्तारसख्या-कोऽङ्को निष्पद्यते, तस्य पूर्वाङ्कस्य तत्र पराङ्के योजन न कार्य-मित्येको नियम इत्यर्थ । एव कृते पाउल अक पढम — अवहट्ट-भाषाया पूर्वनिपातानियमात् प्रथमप्राप्तमङ्कमित्यर्थ, परितेज्जसु — परित्यज । यस्य पूर्वाङ्कस्य यत्पराङ्कयोजने पूर्वप्राप्तोऽङ्को निष्पद्यते तस्य तत्र योजन न कार्यमिति द्वितीयो नियम इत्यर्थ । एव प्रकारेण वर्णानामिति शेष, पताका किज्जसु — पताका कुरु इति योजना ।

अत्र य पूर्वाङ्क यत्र पराङ्के प्रथम योज्यते तद्यो[द्यो]जन-नि पन्ना अङ्का तत्पराङ्कादधोऽध स्थाप्या इति नियमो गुरूपदेशा-दवधारणीय । पूर्वाङ्कस्य सर्वपराङ्कयोजने येऽङ्का नि पद्यते ते कोष्ठपङ्क्तिर्बोध्या ।

अथैतदनुसारेण चतुर्वर्णपताकालिखनप्रकार उच्यते। चतुर्वर्णपताकायामादौ एक कोष्ठ कर्त्तव्य, तत ऊर्द्धाध कोष्ठचतुष्टय कल्पनीय, तत ऊर्द्धाध कोष्ठषट्क, तत ऊर्द्धाध कोष्ठचतुष्टय, ततएक कोष्ठ। एव परस्परसश्लिष्टरेख कोष्ठस्थानपचक विधाय, [य]चोपरितनप्रथमद्वितीयतृतीयचतुर्थपचमकोष्ठेषु एकद्विचतुरष्टषोड़शेति पचाका यथाक्रम स्थाप्या, तत्र प्रथममेककोष्ठस्थानमेकाकयुक्तमिति सर्व्वापेचया प[पू]र्व एकोऽक, स च उत्तरवर्त्तिषु द्वितीयचतुर्थाष्टमाकेषु योज्यमान प्रथम द्वितीयाके योज्यते इति तद्योजननिपन्ना अका द्वितीयाकादधोऽध स्थाप्या इति एकांकद्वितीयाकयोजननिपन्नस्तृतीयाको द्वितीयांकादध स्थाप्य, ततएकाकचतुर्थाकयोजननिपन्न पचमाकस्तृतीयाकादध स्थाप्य, तत एकाष्टमाकयोजननिपन्नो नवमोऽक पचमांकादध स्थाप्यस्ततएकाकस्य षोड़शाकयोजने सप्तदशोऽक प्रस्तारसख्यातोऽधिकसख्याको निपद्यते इति तस्य तत्र योजन न कार्यमेव प्रथमांकस्य द्वितीयचतुर्थाष्टमाकेषु योजन कृत्वा निपन्नद्वितीयतृतीयपचमनवमैश्चतुर्भिरकैर्द्वितीयस्थानकोष्ठपक्ति कल्पनीया। एतत्कोष्ठपङ्क्तिस्था द्वितीयादयश्चत्वारोऽप्यकाश्चतुर्थाष्टमाकपूर्ववर्त्तिन इति क्रमेण तयोर्योज्यमाना प्रथम चतुर्थाके योज्यतेऽतस्तद्योजननिपन्नाअकाश्चतुर्थाकादधोऽध स्थाप्या इति, द्वितीयचतुर्थाकयोजननि-पन्न षष्ठोऽक चतुर्थाकादध स्थाप्यस्ततस्तृतीयचतुर्थांकयोजननि-पन्न सप्तमोऽक षष्ठाकादध स्थाप्य, तत पचमचतुर्थयोजने नवमांक प्रथमप्राप्तो नि.पद्यते इति तस्य तत्र योजन न कार्यमिति,

पचमाष्टमाकयोजननि पन्नस्त्रयोदशाक सप्तमाकादध स्थाप्य, एव द्वितीयादिचतुर्णामकाना चतुर्थाके योजन कृत्वा द्वितीयाष्टमाक-योजननि पन्नो दशमाकस्त्रयोदशाक[ा]दध स्थाप्यस्तत तृतीयाष्ट-मयोजननि पन्न एकादशाको दशमाकादध स्थाप्य, तत पचमा-ष्टमयोजननि पन्नस्त्रयोदशाक प्रथमप्राप्तो नि पद्यते इति तयोर्योजन न कार्यं, नवमाष्टमयोजननि पन्न सप्तदशो नवमषोडशयोजन-नि पन्न पचविंशतितमश्चाक प्रस्तारसख्यातोऽधिकसख्याको नि-पद्यते इति तद्योजन न कार्यम । एव द्वितीयाद्यकाना चतुर्थाष्ट-माकयोर्योजन कृत्वा चतुर्थषष्ठसप्तमत्रयोदशदशमैकादशेति षड्के तृतीयस्थानकोष्ठपङ्क्ति कल्पनीया, ततश्चतुर्थादय षडका अष्ट-माकपूर्व[व]र्त्तिन इति तेषा तत्र योजने चतुर्थाष्टमयोजननि पन्नो-द्वादशाकोऽष्टमाकादध स्थाप्यस्तत षष्ठाष्टमाकयोजननि पन्नश्चतु-र्दशोऽको द्वादशाकादध स्थाप्यस्तत सप्तमाष्टमयोजननि पन्न पच-दशोऽकश्चतुर्दशाकादध स्थाप्यस्ततस्त्रयोदशदशैकादशाकानामष्टमा-कयोजने, अष्टमादीना च षोडशाकयोजने प्रस्तारसख्यातोऽधिक-सख्याका अका नि पद्यते अतस्तेषा तत्र योजन न कार्यमेव चतु-र्थाष्टमाकयोर्योजन कृत्वाष्टमद्वादशचतुर्दशपचदशेति चतुर्भिरकैश्च-तुर्थस्थानकोष्ठपङ्क्ति कल्पनीया । पचमस्थानकोष्ठक षोडशाकयुक्त कल्पनीयम् । एव चतुर्वर्णवृत्तपताकाया कोष्ठस्थानपचक कल्पनीय, तत्स्वरूप लिखित्वा प्रदर्श्यते — [ Vide figure p 73—Ed ] एव च चतुर्वर्णमेरुपङ्क्तिवर्त्तिप्रथमकोष्ठस्थैकाकनिर्द्धारितचतुर्गुरुयुक्तलरूपैक-त्वसख्याकस्य भेद. प्रथम इति [प्राति]स्विक रूप पताकाप्रथम-

कोष्ठस्थैकाङ्केन निर्द्धार्य्यते चतुर्गुरुयुक्त एको भेद प्रथम इति। एव चतुर्वर्णमेरुपङ्क्तिवर्त्तिद्वितीयकोष्ठस्थचतुर्थाङ्कनिर्द्धारितैकलघुत्रिगुरुयुक्तत्वस्वरूपचतुष्ट्वसङ्ख्याकाना भेदाना द्वितीयतृतीयपञ्चमनवमेति प्रातिस्विक रूप चतुर्वर्णपताकाद्वितीयस्थानकोष्ठपङ्क्तिवर्त्तिभिश्चतुर्भिरङ्कैर्निर्द्धार्य्यते एकलघुत्रिगुरुयुक्ताश्चत्वारो भेदा द्वितीयतृतीयपञ्चमनवमरूपा इति। एव चतुर्वर्णमेरुपङ्क्तिवर्त्तितृतीयकोष्ठस्थषष्ठाङ्कनिर्द्धारितद्विगुरुद्विलघुयुक्तत्वस्वरूपषट्सङ्ख्याकाना भेदाना चतुर्थषष्ठसप्तमत्रयोदशद्शमैकादशेति प्रातिस्विक रूप पताकातृतीयस्थानकोष्ठपङ्क्तिवर्त्तिभि षड्भिरङ्कैर्निर्द्धार्य्यते द्विगुरुद्विलघुयुक्ता षड् भेदा चतुर्थषष्ठसप्तमत्रयोदशदशमैकादशरूपा इति। एव चतुर्वर्णमेरुपङ्क्तिवर्त्तिचतुर्थकोष्ठस्थचतुर्थाङ्कनिर्द्धारितैकगुरुत्रिलघुयुक्तत्वस्वरूपचतुष्ट्वसङ्ख्याकाना भेदानामष्टमद्वादशचतुर्दशपञ्चदशेति प्रातिस्विक रूप पताकाचतुर्थस्थानकोष्ठपङ्क्तिवर्त्तिभिश्चतुर्भिरङ्कैरवधार्य्यते एकलघुत्रिगुरुयुक्ताश्चत्वारो भेदा अष्टमद्वादशचतुर्दशपञ्चदशरूपा इति। एव चतुर्वर्णमेरुपङ्क्तिवर्त्तिपञ्चमकोष्ठस्थैकाङ्कनिर्द्धारितचतुर्लघुयुक्तत्वस्वरूपैकत्वसङ्ख्याकस्य भेदस्य षोडश इति प्रातिस्विक रूप पताकापञ्चमकोष्ठस्थषोडशाङ्केन निर्द्धार्य्यते चतुर्लघुरेको भेद षोडशेति। एवमन्यत्रापि पताका बोध्या। ग्रन्थविस्तरभयान्न लिख्यते॥ (E)

४४। अथ वर्णपताका। पूर्वं मेरौ अमुकगुरुका अमुका भेदा भवन्तीत्युक्त, ते च भेदा, प्रस्तारे अमुकस्थानेषु तिष्ठन्तीति ज्ञानार्थं पताकामाह॥ उद्दिट्ठा। तत्र मेरौ यावती गुर्वाद्यङ्कसङ्ख्या भवि-

ष्यति तावत्येव कोष्ठकानि पताकाया लेखनीयानीति युक्त्या सिध्यति॥ उद्दि॥ उद्दिष्टसदृशानकान्देहि, पूर्वाकेण परभरण कुरु। प्राप्तमक प्रथम परित्यज्य प्रस्तारसख्यया पताका गृहाण॥ अयमर्थ। आदौ तावत् यत्सख्याकवर्णवृत्तस्य[?] पताका चिकीर्षिता तत्सख्याका उद्दिष्टवदुत्तरोत्तर द्विगुणिता एकपत्त्यका स्थाप्या, पश्चान्मेरुप्रस्ताराकसख्यया पताकाकोष्ठा वर्द्धनीया॥ तत क्रमात्पूर्वाग्रिमकोष्ठस्थाकयोगस्तत्ते लेख्य इति पताका पूर्यता॥ एतदुक्त॥

एको द्वावथ चत्वार ततोऽष्टाविति वर्द्धन।
पूर्व परेण सयुज्य तदधो लेखयेद्बुध॥
अतिमाकावधि नैव लघयेदत्र कुत्रचित्।
एकत्र लिखित प्राज्ञ पुनरन्यत्र नो लिखेत॥

इति वर्द्धन यावद्विकल्प॥ अत्रोदाहरणमेकाक्षरे १।२। अस्य द्विविकल्पत्वादेकस्थानस्य एकगुरु, द्वितीयस्य एकलघुरित्येतावतैव सिद्धि। सर्वत्राद्यान्ताकौ सर्वगुरुलघुवाचकौ बोध्यौ॥ द्व्यक्षरे यथा,

| | | |
|---|---|---|
| १ | २ | ४ |
| | ३ | |

अत्रैकाकद्व्यकयोर्योगे त्र्यको द्व्यकाधो लेख्य॥ तस्य चतुर्विकल्पत्वात् तावतैव सिद्धि। आद्यस्थान एव सर्वगुरु, द्वितीयद्विपङ्क्तिस्थौ द्व्यत्र्यकौ एकगुर्व्वेकलघू, चतुर्थोऽक सर्वलघुरिति॥ चतुरक्षरे यथा॥ [Vide figure p 73—Ed] अत्रैको द्वाभ्या सह त्रय द्व्यकाध, एकश्चतुर्भि सह पच त्र्यकाध, एकाष्टयोगे नव पचाध, द्विचतुर्योगे षट् चतुरध, द्व्यष्टयोगे दश ष[ड़]ध, द्विषोड़शयोगे न सभवति, त्रिचतुर्योगे सप्त दशाध, पचचतुर्योगे नव एकत्र लिखितत्वान्न लेख्य, त्र्यष्टयोगे एकादश

अह मत्ता मेरु।[1]

दुइ दुइ कोट्ठा सरि लिहहु[2]
पढ़म अंक[3] तसु अंत।
तसु आइहि पुण[4] एक्क[5] सउ[6]
पढमे[7] बेवि मिलंत॥ ४५॥ दोहा।

सिर अंके तसु सिरपर
अंके[8] उबरल कोट्ठ[9] पुरह[10] णिस्संके[11]।
मत्ता मेरु अंक संचारि बुज्झह[12]
बुज्झह[12] जण दुइ[13] चारि॥४६॥ [सिंहिणी?]

सप्ताध, त्रिषोड़शयोगो न, पचाष्टयोगे त्रयोदश एकादशाध, चतुरष्टयोगे द्वादशाष्टाध, चतु षोड़शयोगो न, षड़ष्टयोगे चतुर्दश द्वादशाध, दशाष्टयोगो न, सप्ताष्टयोगे पचदश चतुर्दशाध.। अत्राद्य सर्वगुरु, द्वितीयपक्त्यका एकलघुस्थानानि, तृतीयपक्तौ द्विलघुस्थानानीत्यादि ज्ञेय। यथा आद्यस्थाने सर्वगुरु, द्वित्रिपचनवस्थाने[षु] एकलघवस्त्रिगुरवो वा, चतु षट्दशसप्तैकादशत्रयोदशसु स्थानेषु द्विलघवो द्विगुरवो वा, अष्टद्वादशचतुर्दशपचदशस्थानेषु त्रिलघव-एकगुरवो वा, षोड़शस्थाने सर्वलघुरित्येव सर्वत्र ज्ञेयम॥ (G)

४५–४६। १ अथ मत्ता मेरु (C) अथ मात्रामेरु (A, D E & F) २ लिहेऊ (D) करऊ (F) ३ पढमङ्क (C) ४ पुणु (A) पुणि (D), dropt in (F) ५ रेक्क (C) सक्क (D) ६ दउ (C) सरि (D) ७ त्रिसमे (E), dropt in (F) ८ अक्को (E) ९ कोट्टा (B), कोट्ठ (F), कोट्ठक (E) १० पूरह (D), पूरऊ (E & F) ११ निसङ्क (B) णिसङ्के (C) णीसके (D & E), णीसक (F) १२ बुज्झाऊ (D & E), बुझउ (F) १३ दुक्क (E)

४५-४६। अथ मात्रामेरु। द्वय द्वय कोष्ठ सम लिख, प्रथमोऽकस्तस्यान्ते। तस्यादौ पुनरेक दत्त्वा [प्रथम] द्वावपि मिलितौ॥ शिरोऽङ्के तस्य शिर उपर्यङ्केण कोष्ठ पूरय नि शङ्कम। मात्रामेरोरङ्कसचार्य बुध्यन्ता [बुध्यन्ता] जना द्विचत्वार॥ मेरोस्तु प्रयोजन द्विकलादौ प्रस्तारसख्याज्ञान सर्वगुर्वादिज्ञानञ्च। तथाहि यदि पृच्छ्यते द्विकलस्य कियान् प्रस्तार सर्व्वगुरु, सर्व्वलघुर्वा कियान्, एव त्रिकलस्य कियान् प्रस्तार सर्वगुरु, सर्वलघुर्वा कियान् इत्येवमादिप्रश्ने तज्ज्ञान मेरो प्रयोजन, तत्र चाय प्रकार। प्रथमत कोष्ठद्वय लेख्य तदध कोष्ठद्वय लिखित्वा तदध कोष्ठद्[त्र]य पुनरपि कोष्ठत्रयमधो लेख्य, तत कोष्ठचतुष्टय लिखित्वा तदधोऽपि कोष्ठचतुष्टय लेख्यमेव कोष्ठलिखन कृत्वा तत्राङ्का देया भवन्ति। तत्र चाय प्रकार। सर्व्वेषा कोष्ठानामन्ते प्रथमाङ्को देय, प्रथमाङ्कशब्देनैकाङ्क उच्यते। ततश्च समीकृतकोष्ठयुग्मकानामादिमकोष्ठे सर्वत्रैकाङ्को देयस्तदधस्तनकोष्ठादौ च द्वयाद्यङ्क। तत्रेय युक्ति। उपरिस्थिताङ्क एकस्तत्परतश्चैक, इत्यधस्ताद्द्वयाङ्को लिखित। एव द्वितीयकोष्ठयुग्मस्यादिमकोष्ठकादावेकाङ्कोऽस्ति तदुपरि द्वयाङ्क इति मिलित्वा त्रयाङ्कोऽधस्ताल्लेख्य। एव तृतीयकोष्ठयुग्मकस्यादावेकाङ्कस्तदुपरि च त्रयाङ्क इति मिलित्वा चतुरङ्कोऽधस्ताल्लेख्य इति। प्रथमे द्वयोर्मिलनार्थमत्र प्रथमशब्देन द्वितीयकोष्ठकादिगृहमुच्यते। अथावशिष्टग्रहणाना[गृहाणां]। तत्र च प्राथमिककोष्ठयुग्मके पूरणीयमेव नास्ति, द्वितीयकोष्ठ[युग्म]स्य मध्यगृह पूरणीयं, तत्राय प्रकार, शून्यगृहस्योपरिस्थितो द्वयाङ्कस्तदुपरिस्थितद्विती-

यगृहे चैकाङ्क इति मिलित्वा त्रयः, तेन मध्यमकोष्ठे त्रयाङ्को लेख्यः । तदधोगृहं रिक्तमस्ति, तदुपरिस्थितस्य त्रयाङ्कस्य तदुपरि-द्वितीयगृहस्थितैकाङ्कयोजनात् चतुरङ्को जातः, स तदधो लेख्यः । तृतीयकोष्ठयुग्मप्रथमपङ्क्तौ मध्यमकोष्ठद्वयं रिक्तमस्ति, तत्र चैकस्योपरि त्रयाङ्को द्वितीयगृहे च त्रयाङ्कस्तयोर्मिलनाच्च षडङ्कः, स तत्र लेख्यः, तदपरकोष्ठस्योपरि चतुरङ्कस्तदुपरिस्थितद्वितीयगृहे चैकाङ्क इति मिलित्वा पञ्चाङ्कः, स तत्र लेख्यः । तदधश्च कोष्ठ-द्वयं रिक्तमस्ति, तत्रादिगृहस्योपरि षड़ङ्कस्तदुपरिस्थितद्वितीय-गृहे च चतुरङ्क इति मिलित्वा दशाङ्कस्तत्र लेख्यः, तदपरकोष्ठस्य उपरि पञ्चाङ्कस्तदुपरिस्थितद्वितीयगृहे चैकाङ्क इति मिलित्वा षड़ङ्कः, स तत्र लेख्य इति शिर अङ्केत्यादेरर्थः ।

अथ प्रश्नस्योत्तरदानं प्रकटीक्रियते । तत्र द्विकलस्य कियान् प्रस्तार इति प्रश्ने, प्रथमगृहे एकाङ्कः परगृहे चैकाङ्क इति मिलित्वा द्वयं, तेन द्विकलस्य प्रस्तारद्वयमिति वाच्यम । द्विकले सर्वगुरुः कियानिति प्रश्ने, प्रथमं एकाङ्कसत्त्वात्सर्वगुरुरेक इति वाच्यमन्ते चैकाङ्कसत्त्वात्सर्वलघुरेक इति वाच्यम । त्रिकले कियान् प्रस्तार इति प्रश्ने, प्रथमगृहे द्वयाङ्कः परगृहे चैकाङ्क इति मिलित्वा त्रयमिति । त्रिकले एकगुरुः कियानिति प्रश्ने, प्रथमतो द्वयाङ्कसत्त्वादेकगुरुद्वयमिति वाच्यम । त्रिकले सर्व्वलघुः कियानिति प्रश्ने, अन्ते एकाङ्कसत्त्वात्सर्व्वलघुरेक इति वाच्यम् । सर्व्वलघुकथनमेव बोध्यम् । एवं चतुष्कले कियान् प्रस्तार इति प्रश्ने, तृतीयकोष्ठके एकस्त्रयमेकं इति मिलित्वा पञ्चाङ्कसत्त्वात्प्रस्ता[र]पञ्चकमिति

वाच्यम । चतुष्कले सर्व्वगुरु कियानिति प्रश्ने, प्रथमत एकाङ्क-सत्त्वादेक इति वाच्यम । चतुष्कले एकगुरु कियानिति प्रश्ने, परगृहे त्रयाङ्कसत्त्वादेकगुरुत्रयमिति वाच्यम । एव पञ्चकलो-[ले] कियान् प्रस्तार इति प्रश्ने, चतुर्थकोष्ठे मिलिताऽष्टाङ्क-सत्त्वादष्टाविति वाच्यम । तत्र च प्रथमतस्त्रयाङ्कसत्त्वाद्विगुरुत्रय-मिति वाच्यम् । परगृहे चतुरङ्कसत्त्वादेकगुरुकचतुष्टयमिति वाच्यम । एव षट्कले मिलिता त्रयोदशाङ्कसत्त्वात त्रयोदश प्रस्तारा इति वाच्यम । प्रथमत एकाङ्कसत्त्वादेकसर्व्वगुरुरिति वाच्यम । परगृहे ष[ड]ङ्कसत्त्वाद्विगुरुषट्क, ततश्च पञ्चाङ्कसत्त्वादेकगुरुपञ्चक-मेवमग्रेऽपि बोध्यम । एवमसख्यातमानेतु शक्यते इति सप्तकलोऽपि लिखित । (C) [Vide figure p 88—Ed ]

४५-४६ । अथ मात्रामेरुप्रकारमाह दुइ दुइ कोट्ठेति । दुइ दुइ—द्वयोर्द्वयो कलयोरिति शेष, कोट्ठा—कोष्ठकानि, सरि—सदृशानि समसख्याकानीति यावत्, लिहहु—लिखत । एककलप्रस्താराभावात् द्विकलमारभ्य मेरूत्पत्ति, एव च द्वितीय-तृतीयेति द्वयो कलयो प्रत्येक कोष्ठद्वयम् ऊर्द्धाध स्थित्या पर-स्परसश्लिष्ट, चतुर्थपचमेति द्वयो कलयो प्रत्येक कोष्ठत्रयमूर्द्धाध-स्थित्या परस्परसश्लिष्ट, षष्ठसप्तमेति द्वयो कलयोरूर्द्धाध स्थित्या परस्परससक्त प्रत्येक कोष्ठचतुष्टयमित्यादिरीत्या द्वयोर्द्वयो कलयो समसख्याकान्यूर्द्धाध स्थित्या परस्परससक्तानि कोष्ठकानि उत्तरो-त्तर वर्द्धितानि गुरूपदेशात कल्पमी[नी]यानीति निर्गलितार्थ । अत्र कोष्ठसादृश्य समसख्याकत्वमेव । तसु—तेषु कोष्ठेषु, अत—

अतिमे कोष्ठे इत्यर्थ, पढम[अ]क — प्रथमोऽक स्थाप्य इति शेष, तसु आइहि — तेष्वाद्येषु कोष्ठेषु मध्ये [पुन] विषमे प्रथमतृतीयपञ्चमसप्तमादिकोष्ठेषु, एक्क — एक अक स्थाप्य इत्यनुषग । क्वचिद्विषमे इत्यस्य स्थाने पढमे इति पाठ, तत्र समादित्यध्याहृत्य योज्यम, एव च समात्प्रथमे पूर्ववर्त्तिनि विषमे इति, स एवार्थ, यत समात्पूर्ववर्त्ती विषम एवेति, सउ — समेषु द्वितीयचतुर्थषष्ठाष्टमादिषु कोष्ठेषु, बेवि मिलत — द्वौ मिलितौ पूर्वाकाविति शेष, स्थापयेत्यनुषग । आद्या ये विषमा कोष्ठास्तेष्वेकाको देय, ये समास्तेषु पूर्ववर्त्त्यकद्वययोजननि पन्नोऽको देय इत्यर्थ । तत उबरल कोट्ठ — उर्वरितानि आद्यनातरालस्थितानि कोष्ठकानीत्यर्थ । सिर अके तसु सिरपर अके — शिरोऽका तच्छिरउपर्यकाभ्या, णीसक[के] — नि शक यथा स्यात, पूरहि[ऊ] — पूरय, एव अक सचारी[रि] — अकान् सचार्य सस्थाप्य, जण दुइ चारि — जना द्विचत्वार, मत्ता मेरु — मात्रामेरु जाणऊ [बुझ्झऊ] बुध्यध्वम् इति योजना ।

अथैतन्निर्माणप्रकारो लिख्यते । एककलप्रस्ताराभावात् द्विकलमारभ्य मेरुप्रवृत्ति । एव च प्रथम वामदक्षिणयोरि[रे]वागुलमात्रदीर्घं मध्ये रेखाभूतमूर्द्धमधस्य द्व्यगुलमात्रमतर विसृज्योर्द्धाधो रेखात्रय कार्यं, ततस्तत्पार्श्वद्वयमेलनम ऋजुरेखया कार्यम, एव दीर्घकोष्ठद्वय विधाय तत्र प्रथमरेखामध्यदेशमारभ्याधस्तनतृतीयरेखामध्यदेशपर्यंतम् एकाम् ऋजुरेखा दत्त्वा प्रथमस्थाने ऊर्द्धाध स्थित्या परस्परसबद्ध कोष्ठक[च]तुष्टय कार्यं, तत्रातिमकोष्ठयो प्रत्येकमको देय, आद्ये उपरितने प्रथमे च विषमत्वा-

द्वेको देय, तदधस्तने च द्वितीयत्वात् समे उपरितनकोष्ठद्वय-स्थैकाङ्कद्वयरूपपूर्व्वाङ्कद्वययोजननि पन्नद्वितीयाङ्केन पूरण विधेयम्। एव चोपरितनकोष्ठद्वय द्विकलमेरुपङ्क्ति, तत्र प्रथमकोष्ठस्थैकाङ्केन द्विकलस्यैकगुरुरूप एको भेद इति, द्वितीयकोष्ठस्थैकाङ्केन च द्विलघुरेको भेद इति प्रतीयते। कोष्ठद्वयस्थैकाङ्कद्वययोजननि पन्न-द्वितीयाङ्केन च द्विकलस्य भेदद्वयमिति द्विकलगणभेदपिण्डीभूता समस्ता द्विसख्या प्रतीयते। एवमधस्त[न]कोष्ठद्वय त्रिमात्रमेरु-पङ्क्ति, तत्र प्रथमकोष्ठस्थद्वितीयाङ्केन त्रिकलप्रस्तारे एकगुरुयुक्त भेदद्वय, द्वितीयकोष्ठस्थैकाङ्केन च त्रिलघुयुक्त एको भेद इति प्रतीयते। कोष्ठद्वयस्थद्वितीयैकेत्यङ्कद्वययोजननि पन्नतृतीयाङ्केन च त्रिकलस्य समस्तास्त्रयो भेदा इति पिण्डीभूता समस्ता त्रिलरूपा त्रिकलगणभेदसख्या प्रतीयते। ततोऽधस्तनीं तृतीया रेखामाद्यन्त-पार्श्वयोर्मनागवर्द्धयित्वाऽधोध एकैकमङ्गुलमन्तर विसृज्य तत्परिमाण रेखाद्वय कार्यम्, ऋजुरेखया तत्पार्श्वद्वयमेलन च कार्यम्। एव त्रिकलमेरुपङ्क्तिसस्पृष्ट तदधस्थ दीर्घ कोष्ठद्वय कार्यं, तत्रोपरि-तनत्रिकलमेरुपङ्क्तिप्रथमकोष्ठाधोरेखामध्यदेशमारभ्याधस्तनान्तिमरे-खापर्य्यन्तम एका ऋजुरेखा कार्या, एव तत्पङ्क्तिद्वितीयकोष्ठाधो-रेखामध्यदेशमारभ्याधस्तनान्तिमरेखापर्य्यन्तमेका ऋजुरेखा कार्या, एव द्विती[य]स्थमेरूर्द्धापेक्षया अध स्थित्या परस्प[र]ससक्त कोष्ठ-षट्क कार्यं, तत्रोपरितनकोष्ठमयात्मिका सर्वापेक्षया तृतीया चतु-कलमेरुपङ्क्ति, तत्र सर्वापेक्षया तृतीयत्वाद्विषमे प्रथमकोष्ठे सर्वा-न्तिमे च तृतीये एकोऽङ्को देय, द्वितीये च शिरोऽङ्कतच्छिरोऽङ्क-

द्वितीयैकेत्यङ्कद्वययोजननि पन्नतृतीयाङ्केन पूरणं विधेयम, ए[त]द्-धस्तनी च कोष्ठत्रयात्मिका चतुर्थी पञ्चकलमेरुपङ्क्ति, तत्र प्रथम-कोष्ठे सर्वापेक्षया चतुर्थत्वात्समे एकद्वयेतिपूर्वाङ्कद्वययोजननि पन्न-तृतीयाङ्केन पूरणं कार्यं, तदग्रिमे च द्वितीयकोष्ठे शिरोऽङ्क-तच्छिरोऽङ्कतृतीयैकेत्यङ्कद्वययोजननि पन्नचतुर्थाङ्केन पूरणं कार्यम्। तदग्रिमे च तृतीयकोष्ठे सर्वान्तिमे एकोऽङ्को देय, तत्रोपरितन-कोष्ठरूपात्मकचतु कलमेरुपङ्क्तिप्रथमकोष्ठस्थैकाङ्केन चतु कलप्रस्तारे द्विगुरुरेको भेद इति प्रतीयते। तदग्रिमद्वितीयकोष्ठस्थतृतीयाङ्केन तत्र प्रस्तारे एकगुरुयुक्त भेदत्रयमिति प्रतीयते। अन्तिमतृतीय-कोष्ठस्थैकाङ्केन च तत्र प्रस्तारे त्रि[चतु]लघुयुक्त एको भेद इति प्रतीयते। एकतृतीयैकेतिकोष्ठत्रयस्थसमस्ताङ्कयोजननि पन्नपञ्चमाङ्केन त्रि[चतु]ष्कलस्य पञ्च भेदा इति समस्ता पिण्डीभूता प्रस्तारसंख्या प्रतीये[यते]। एवमेतदधस्तनकोष्ठत्रयात्मकपञ्चकलप्रस्तारे द्विगुरुयुक्त भेदत्रयमिति प्रतीयते। तदग्रिमद्वितीयकोष्ठस्थचतुर्थाङ्केन च तत्र प्रस्तारे एक[गुरु]युक्त भेदचतुष्टयमिति प्रतीयते। तदग्रिमतृतीय-कोष्ठस्थैकाङ्केन च तत्र प्रस्तारे पञ्चलघुयुक्त एको भेद इति प्रतीयते। कोष्ठत्रयस्थत्रिचतुरेकेत्यङ्कत्रययोजननि पन्नाष्टमाङ्केन च पञ्चकलस्याष्टौ भेदा इति समस्ता पिण्डीभूताऽष्टत्वरूपा पञ्चकल-[प्र]स्तारसंख्या प्रतीयते।

एवं पूर्ववदेतत्कोष्ठद्वयादधस्ताद्दीर्घं कोष्ठद्वयं निर्माय उपरि-तनपञ्चकलमेरुपङ्क्तिप्रथमकोष्ठाधोरेखामध्यदेशमारभ्याधस्तनद्वितीय-कोष्ठाधोरेखापर्यन्तमृजुरेखा देया, तत उपरितनद्वितीयकोष्ठाधो-

रेखामध्यदेशमारभ्याधस्तनद्वितीयकोष्ठाधोरेखापर्यंतमृजुरेखा देया, तत उपरितनतृतीयकोष्ठाधोरेखामध्य[देश]मारभ्याधस्तनकोष्ठाधोरेखापर्यंतमृजुरेखा देया, एव तृतीयस्थाने ऊर्द्धाध स्थित्या परस्परसंबद्ध कोष्ठाष्टक कार्यं, तत्रोपरितन कोष्ठचतुष्टय षट्कलमेरुपङ्क्ति । तत्र प्रथमकोष्ठे सर्वापेक्षया पचमत्वाद्विषमे सर्वांतिमे चतुर्थे च एकोऽको देय । द्वितीयकोष्ठे च शिरोऽकतच्छिरोऽकतृतीयाकद्वययोजननि पन्नषष्ठाकेन पूरण कार्यम् । तदग्रि[ग्रि]मे च तृतीयकोष्ठे शिरोऽकतच्छिरोऽकचतुर्थैकेत्यकद्वययोजननि पन्नपचमाकेन पूरण विधेयम । सर्वांतिमे च चतुर्थे कोष्ठे एकाकेन पूरण विधेयम । एव चात्र प्रथमकोष्ठस्थैकाकेन षट्कलप्रस्तारे त्रिगुरुयुक्त एको भेद इति प्रतीये[यते] । तदग्रिमद्वितीयकोष्ठस्थषष्ठाकेन च त[त्र] प्रस्तारे द्विगुरुयुक्ता षड्भेदा इति प्रतीयते । तदग्रिमतृतीयकोष्ठस्थपचमाकेन च तत्र प्रस्तारे एकगुरुयुक्ता पच भेदा इति प्रतीयते । तदग्रिमचतुर्थकोष्ठस्थैकाकेन च षड्लघुयुक्त एको भेद इति प्रतीयते । कोष्ठचतुष्टयस्थाकचतुष्टययोजननि पन्न[त्र]योदशाकेन च समस्ता पिण्डीभूता षट्कलप्रस्तारे सख्या त्रयोदशरूपा प्रतीयते । तत्र प्रथमकोष्ठे च सर्वापेक्षया षष्ठत्वात्समे एकतृतीयेतिपूर्वाकद्वययोजननि पन्नचतुर्थाकेन पूरण कार्यम । तदग्रिमे द्वितीयकोष्ठे शिरोऽकतच्छिरोऽकषष्ठचतुर्थेत्यकद्वययोजननि पन्नदशमाकेन पूरण कार्यम् । तदग्रिमतृतीयकोष्ठे च शिरोऽक[तच्छिरोऽक]पचमैकेत्यकद्वययोजननि पन्नषष्ठाकेन पूरण कार्यम । अधस्तन कोष्ठचतुष्टय च सप्तकलचतुर्थाकेन सप्तकलप्रस्तारे त्रिगुरुयुक्त भेद-

चतुष्टयमिति प्रतीयते। तदग्रिमद्वितीयकोष्ठस्थदशमाङ्केन च तत्र प्रस्तारे द्विगुरुयुक्ता दश भेदा इति प्रतीयते। तदग्रिमतृतीयकोष्ठस्थषष्ठाङ्केन च तत्र प्रस्तारे एकगुरुयुक्ता षड्भेदा इति प्रतीयते। तदग्रिमचतुर्थकोष्ठस्थैकाङ्केन च तत्र प्रस्तारे सप्तलघुयुक्त एको भेद इति प्रतीयते। कोष्ठचतुष्टयस्थाङ्कचतुष्टययोजननिष्पन्नैकविंशतितमाङ्केन च समस्ता पिण्डीभूता एकविंशतिरूपा सप्तकल[मे]रुपङ्क्तिः। एवमग्रेऽपि मेरुकल्पना यथेच्छं विधेया। अस्माभिस्तु ग्रन्थविस्तरभयात्प्रयोजनाभावाच्च न लिखिता।

मात्रामेरुः।

| | | | | |
|---|---|---|---|---|
| १ | १ | | | २ |
| २ | १ | | | ३ |
| १ | ३ | १ | | ५ |
| ३ | ४ | १ | | ८ |
| १ | ६ | ५ | १ | १३ |
| ४ | १० | ६ | १ | २१ |

अथ द्विकलमारभ्य सप्तकलपर्यन्तं मात्रामेरुस्वरूपं लिख्यते॥ (E)

४५-४६। अथ सर्वलघ्वेकगुरुद्विगुर्वादिज्ञानार्थं मात्रामेरुमाह। दुइ। द्वौ द्वौ कोष्ठौ सदृशौ कुरु, प्रथममङ्कं तेषामन्ते। तस्यादौ पुनरेकं स्थापय समे द्वौ मिलितौ॥ समे कोष्ठे द्विकोष्ठादिपङ्क्तेर्द्वितीयचतुर्थादौ कोष्ठे मिलितौ द्वावूर्द्धाङ्कौ कुरु इत्यर्थः॥ रिक्तकोष्ठपूरणोपायमाह। सिर। शिरोऽङ्केण तस्य शिरःपराङ्केण च उर्वरितं कोष्ठं पूरय निःशङ्कं मात्रामेरौ अङ्कसञ्चारं बुध्यते बुध्यते जना द्विचतुराः॥ अत्र खण्डमेरौ त्रिकोष्ठकद्विपङ्क्तौ प्रथमपङ्क्तिस्थं रिक्तं कोष्ठं तिर्यक् तदुपरितनकोष्ठद्वयस्थाङ्कद्वयमेकीकृत्य पूरणीयं, द्वितीयपङ्क्तिस्थं रिक्तं कोष्ठं तूपरितनमेव कोष्ठद्वयस्थाङ्कमेकीकृत्य पूरणीयमित्यर्थः॥ एवमग्रेऽपि। उक्तं च। कोष्ठमेकं लिखेदादौ तदधः पङ्क्तियुग्मके। द्वौ द्वौ च

अह मत्ता पताका ।[1]

(क) उद्दिट्ठा[2] सरि अंका थप्पहु[3]
बामावत्ते[4] पर ले[5] लुप्पहु[6] ।

(ख) एक्क लोपे एक्क[7] गुरु आणहु[8]
दुइ[9] तिणि[10] लोपे दुइ तिणि जाणहु[11] ॥ ४७ ॥

अलिल्ला ।

(ग) मत्त पताका पिंगल गाव[12]
जो पारह[13] सो परहि[14] मिलाव[15] । ४८[16] ॥

---

तदधस्त्रींस्त्रीनेवरूपेण वर्धनम् ॥ अत्यकोष्ठेषु सर्वेषु प्रथमाक समालिखेत् । आद्यकोष्ठे द्विपङ्क्त्यादौ एवमेकान्तर लिखेत् ॥ आदावेक ततो द्वौ च, पुनस्त्रैक ततस्त्रयम । तिर्यक्समोर्द्ध्व-कोष्ठाङ्के रिक्त कोष्ठ प्रपूरयेत् । विवेकेनाकसञ्चारे मात्रामेरु स्फुटो भवेत् ॥ लेखनपङ्क्त्या प्रकारस्तु द्विधा ॥ स यथा, एक कोष्ठमादौ कृत्वा ततो द्विकोष्ठद्विलेखनपङ्क्त्यादि लिखेत् ॥ द्विकोष्ठादारभ्यैव वा लिखेदिति ॥ (G)

---

(क) Not found in MSS B & C (ख) found in all (ग) not found in MS F There is a transposition of these Slokas in MS D thus the Slokas ४५, ४६ ४७ and ४८ precede ४१ ४२, ४३ and ४४ the next two Slokas ४९ and ५० are also transposed in the same—Ed

४७—४८। १ अथ मात्रापताका (A & D) अह मत्तामेरु (B) २ उद्दिट्ठा (A), उद्दिट्टा (D) उद्दिट्ठु (F) ३ थ (D), दिज्जसु (A) ४ वामापत्ते (A), वामावत्ते (D) ५ लेइ (A & D) ले (E) ६ लोपिज्जसु (A) लघुऊ (E) ७ एक (A) ८ जानह (A), आनह (B C & E) ९ दु (D) १ तिन (B) तिण (C), त्तिण (D) तिखि (F) ११ माणह (A), जानह (B) जाणह (C), जाऊ (F) १२ गावै (D) १३ पावह (A) पावइ (E) जानै (D) १४ परह (B & C) १५ बुझाव (E), बुझावेइ (D) १६ ४९ (A)

४७-४८। अथ मात्रापताकामाह॥ एकलोपे एकगुरुमानय, द्वित्रिलोपे द्वित्रीन् जानीहि। मात्रापताका पिंगलो गायति, य प्राप्यते स परतो मिल्यते॥ प्राप्यते अवशिष्यते, मिल्यते लिख्यते। अत्र षट्कलप्रस्तारे एकगुरु कुत्र दिगुरु कुत्रेति ज्ञान प्रयोजन, तत्र चैकलोपादिना तज्ज्ञानमित्युक्त, तत्राङ्कदानमन्तरेण [न] सम्भवत्येव अतस्तत्राङ्कादय कथमित्याकाङ्क्षाया दर्शनादुद्दिष्टसङ्क्ष्याङ्कदान सिद्ध्यति, तच्च पूर्व्वं सिद्ध, यथा १, २, ३, ५, ८, १३, तत्र शेषाङ्के पूर्व्वपूर्व्वाङ्कलोप कार्य्यो भवति, अत्र त्रयोदशाङ्के शेषभूते तत्पूर्व्वस्य अष्टाङ्कलोपे पञ्चाङ्को निष्पद्यते स लेख्य, तस्मिन्नेव त्रयोदशाङ्के तत्पूर्व्वस्य च पञ्चाङ्कस्य लोपे अष्टाङ्कोऽवशिष्यते स त[द]धस्ताल्लेख्य, एव तत्र त्रयाङ्कलोपे दशाङ्कोऽवशिष्यते स तदधो लेख्य, एव द्वयाङ्कलोपे एकादशाङ्क स तदधो लेख्य, एवमेकाङ्कलोपे द्वादशाङ्क स तदधो लेख्य, इत्येकलोपादेक-गुरुकपङ्क्ति। अथ द्वयलोपे द्विगुरुरानीयते,—तत्र त्रयोदशाङ्के तत्पूर्वाङ्कद्वयलोपेन दिगुरुर्देय, तत्र यद्यष्टौ पञ्चेत्यनयोर्लोप क्रियते तदा शून्यमेवेत्यतोऽष्टौ त्रयमित्यनयोर्लोपेन द्वयाङ्क प्राप्यते स च द्वितीयपङ्क्तेरुपरि स्थाप्य, ततश्चाष्टौ द्वयमित्यनयोर्लोपे त्रयाङ्कोऽवशिष्यते स द्वयाङ्कस्याधस्ताल्लेख्य, ततश्चाष्टावेक इत्यनयो-र्लोपे चतुरङ्कोऽवशिष्यते स तदधो लेख्य, ततश्च पञ्च त्रयमित्य-नयोर्लोपे पञ्चाङ्क प्राप्यते स च पूर्व्वपङ्क्तिपतितत्वात्पुनर्न लिख्यते, तेन पञ्च द्वयमित्यनयोर्लोपे षडङ्कोऽवशिष्यते स तदधो लेख्य, ततश्च पञ्चैक इत्यनयोर्लोपे सप्ताङ्कोऽवशिष्यते स तदधो लेख्य,

ततश्च त्रय द्वयमित्यनयोर्लोपे अष्टाङ्क प्राप्यते स च प्रथमपङ्क्ति-पतितत्वात् [न] लिख्यते, तेन त्रयमेक इत्यनयोर्लोपे नवाङ्क प्राप्यते स तदधो लेख्य, इति [द्वि]गुरुपङ्क्ति ।

अथ त्रयलोपेन त्रिगुरुक आनेयो भवति,—तत्राष्टौ पञ्च त्रय-मिति मिलित्वा षोडशाङ्क, अष्टौ पञ्च द्वयमिति मिलित्वा पञ्चदशाङ्क, अष्टौ पञ्च एक इति मिलित्वा चतुर्द्दशाङ्क, एतेषा त्रयोदशाङ्के लोपो न सम्भवति, एवमष्टौ त्रय द्वय[मि]ति मिलित्वा त्रयोदशाङ्क, तस्य लोपश्चेत् क्रियते तदा शून्यमायात्यतस्तदपि व्यर्थं, पञ्च त्रय द्वयमित्येषा लोपे त्रयाङ्कोऽवशिष्यते स च पूर्वलिखितत्वान्न लिख्यते, पञ्च द्वयमेक इत्येतेषा लोपे पञ्चाङ्क प्राप्यते सोऽपि पूर्व्वलिखितस्तेनाष्टौ त्रयमेक इत्येतेषा लोपे एकाङ्कोऽवशिष्यते स तृतीयपङ्क्तौ लेख्य । तथाच पञ्चमाष्टमदशमैकादशद्वादशस्थाने[षु] षट्कलप्रस्तारस्यैकगुरुक पततीति, एव द्वितीय-तृतीयचतुर्थषष्ठसप्तमनवमस्थाने[षु] द्विगुरु पततीति, प्रथमस्थाने च त्रिगुरु पततीति ज्ञेयम्, अत्र च त्रयोदशाङ्कस्य लिखितत्वात्तत्र गुरुर्नास्तीति ज्ञायते, [ते]न त्रयोदशाङ्क सर्व्वलघुरिति ।

अत्र च पञ्चमादिस्थानेष्वेकैकगुरुक पततीत्युक्त, स कीदृश-इति प्रश्ने, सर्व्वा कला कला उद्दिष्टवदङ्का देया, यथा १, २, ३, ५, ८, १३, ततश्च यदङ्कलोपेन पञ्चाङ्क तदीया मात्रा परमात्रया सह गुरुता प्रापणीया भवति, प्रकृते च अष्टाङ्क-लोपात्पञ्चाङ्क प्राप्त, स चाष्टाङ्क पञ्चम्या कलायामस्ति, तेन पञ्चमी कला षट्कलया ।।।।।। गुरुता प्राप्ता, तेन ।।।।ऽ एता-

दृश इति वक्तव्यम। एवमष्टमस्थाने कीदृगिति प्रश्ने, पञ्चाङ्क-लोपादष्टाङ्क प्राप्त, पञ्चाङ्कस्तु चतुर्थ्यां कलायामस्ति, तेन चतुर्थी कला पञ्चम्या कलया सह गुरुता प्राप्ता, तेन ।।।ऽ। एतादृश इति वाच्यम। एवमग्रेऽपि। एव द्वितीयस्थाने द्विगुरुक कीदृगिति प्रश्नेऽष्टाङ्कत्रयाङ्कलोपाद्द्वयाङ्को लब्ध, त्रयाङ्कस्तृतीयकलायामष्टाङ्कश्च पञ्चम्या कलायामतस्तृतीया कला [चतुर्थी कला]मादाय पञ्चमी कला षष्ठी कलामादाय गुरुता प्राप्ता, तेन ।।ऽऽ एतादृगिति वक्तव्यम, एवमग्रेऽपि। अङ्कस्य वामगतित्वादेवक्रमेण गणना कार्य्या। अत्र च पञ्चमादिस्थानेषु एकैकगुरुक पततीति उक्त, स कीदृश-इति प्रश्ने मात्रानष्टप्रकार कला ज्ञातव्य इति सक्षेप ॥ (C)

४७—४८। अथ मात्रापताकानिर्माणप्रकारमाह, उद्दिट्ठा सरि अका इति। उद्दिट्ठा सरि अका—अत्र उद्दिष्टपदस्योद्दिष्टाक-परत्वादुद्दिष्टाकसदृशानकानेकद्वित्रिपञ्चाष्टत्रयोदशादिरूपानित्यर्थ, थप्पउ—क्रमेणोत्तरोत्तर स्थापयत तान् इति शेष । बामावत्ते—वामावर्त्तेन प्रतिलोमविधिना सर्वातिमाकाव्यवहित्त[त]पूर्वाकमार-भ्येति यावत्। लेइ—गृहीत्वा, पर—परस्मिन्, सर्वातिमाके, लुप्पउ—लोपयत न्यूनता नयत सर्वातिमेऽके तदव्यवहितपूर्वाकमारभ्य पूर्व-पूर्वाका क्रमेण लोप्या, तत्र एक लोपे—एकलोपे, अत्र एकपदस्यैकाकपरत्वादेकाक-लोपे इत्यर्थ, एक गुरु जाणउ—एकगुरु जानीत। दुत्तिणिलोपे—द्वित्राणामकाना लोपे, दुत्तिणि—द्वित्रान्

षट्कलपताका

| | | | |
|---|---|---|---|
| १ | २ | ५ | १३ |
| | ३ | ८ | |
| | ४ | १० | |
| | ६ | ११ | |
| | ७ | १२ | |
| | ९ | | |

गुरून् जाणऊ—जानीत। एकैकपूर्वाङ्कलोपे येऽङ्का अवशिष्यन्ते ते एकगुरुयुक्तभेदज्ञापकाः, पूर्व्वाङ्कद्वयलोपे येऽङ्का अवशिष्यन्ते ते गुरुद्वययुक्तभेदज्ञापकाः, पूर्वाङ्कत्रयलोपे येऽवशिष्यन्ते ते गुरुत्रययुक्तभेदज्ञापका इति निर्गलितार्थः। एवं प्रकारेण पिंगल णाग—पिंगलो नागः मत्त पताका—मात्रापताकां गाबइ—गायति कथयतीत्यर्थः। जो पावइ—यः प्राप्नोति गुरूपदेशाज्जानाति, सो परहि बुझ्झावइ—स परं बोधयति इति योजना। अत्र [?] एकत्वसंख्याविशिष्टौ द्वित्वसंख्याविशिष्टौ च, पूर्वाङ्कः प्रथमः सर्वान्तिमाङ्के लुप्यते तदव्यवहितपूर्वाङ्कमारभ्यतेऽवशिष्टाङ्का क्रमेणाधोऽधः स्थाप्या इति, यदङ्कद्वयलोपे अन्योऽवशिष्यते पूर्वप्राप्तो वाऽङ्कः प्राप्यते तदङ्कद्वयलोपो न कार्य इति नियमत्रयं गुरूपदेशादध्यवसेयम्।

अथ षट्कलपताकास्वरू[प]लिखनप्रकारतो वामदक्षिणयोरङ्गुलपञ्चकपरिमाणमूर्द्धाधः ऋजुरेखाद्वयमर्द्धाङ्गुलमधिकं वा मध्यदेशेऽन्तरं विसृज्य कर्त्तव्यं, ततो ऋजुरेखया तत्पार्श्वमेलनं विधेयमेवमेकं दीर्घं कोष्ठं विधाय तत्रैकाङ्गुलपरिमितमन्तरं त्यक्त्वोर्द्ध्वरेखामारभ्याधोरेखापर्यन्तं पञ्च ऋजुरेखा क्रमेण दत्त्वा कोष्ठषट्कमुत्तरोत्तरं परस्परसंश्लिष्टं विधेयं, तत्रोद्दिष्टाङ्कसदृशा एकद्वित्रिपञ्चाऽष्टत्रयोदशेति षडङ्का क्रमेण स्थाप्या। ततो द्वितीयाङ्ककोष्ठादधोऽर्द्धाङ्गुलमितानि परस्परसंश्लिष्टानि पञ्च कोष्ठकानि कार्याणि, ततः पञ्चमाङ्ककोष्ठादधोऽधस्तादृशमेव कोष्ठचतुष्टयं कार्यं, ततः सर्वान्तिमत्रयोदशाङ्कमध्ये तदव्य[व]हिताष्टाङ्कलोपे उर्वरितः पञ्चमाङ्कः तत्र चतुर्थकोष्ठे विन्यस्तमेवास्तीति तदन्यत्र लेख्यमिति सम्प्रदायः। ततः

सर्वातिमत्रयोदशाङ्कमध्ये क्रमप्राप्तपञ्चमाङ्कलोपे उर्वरितमष्टमाङ्क पञ्चमाङ्कको[को]ष्ठादधस्तनकोष्ठे स्थाप्य, ततस्तत्र क्रमप्राप्ततृतीयाङ्क-लोपे उर्वरित दशमाङ्कमष्टमाङ्ककोष्ठादधस्तनकोष्ठे स्थाप्य, ततस्तत्र क्रमप्राप्तद्वितीयाङ्कलोपे उर्वरितमेकादशाङ्क दशमाङ्ककोष्ठादधस्तन-कोष्ठे स्थाप्य, ततस्तत्र क्रमप्राप्तैकाङ्कलोपे उर्वरित द्वादशाङ्कमेका-दशाङ्ककोष्ठादधस्तनकोष्ठे स्थाप्य, सेयमेकाङ्कलोपनिष्पन्ना पञ्चकोष्ठा-त्मिका षट्कलमेरुपङ्क्तितृतीयकोष्ठस्थपञ्चमाङ्कनिर्द्धारितैकगुरुयुक्तल-स्वरूपपञ्चलसङ्ख्याकाना षट्कलगणभेदाना पञ्चमाष्टमदशमैकादश-द्वादशेतिप्रातिस्विकरूपज्ञापिका षट्कलपताकापङ्क्ति । ततो द्व्यङ्क-लोपेऽष्टमपञ्चमाङ्कयोस्त्रयोदशाङ्कमध्ये लोप शून्यशेषत्वान्न कार्य-इति, सर्वातिमत्रयोदशाङ्कमध्ये अष्टमतृतीयेत्यङ्कद्वयलोपे उर्वरित द्वितीयमङ्क तद्द्वितीयकोष्ठेऽस्त्येव ततस्त्रयोदशमध्ये अष्टमद्वितीये-त्यङ्कद्वयलोपे उर्वरित तृतीयाङ्क द्वितीयाङ्ककोष्ठादधस्तनकोष्ठे स्थाप्य, ततस्त्रयोदशमध्ये अष्टमैकेत्यङ्कद्वयलोपे उर्वरित चतुर्थमङ्क तृतीयाङ्ककोष्ठादधस्तनकोष्ठे स्थाप्य, ततस्त्रयोदशमध्ये पञ्चमतृतीये-त्यङ्कद्वयलोपे प्रथमप्राप्त पञ्चमाङ्कोऽवशिष्यते इति पञ्चमतृतीयाङ्क-योर्लोप त्यक्त्वा पञ्चमद्वितीययोर्लोपे अवशिष्ट षष्ठाङ्कस्तुर्याङ्क-कोष्ठादधस्तनकोष्ठे स्थाप्य, ततस्तत्र पञ्चमैकेत्यङ्कद्वयलोपे अवशिष्ट सप्तमोऽङ्क षष्ठाङ्ककोष्ठादधस्तनकोष्ठे स्थाप्य, ततस्तत्र पञ्चमैकेत्यङ्क-लोपे अवशिष्ट सप्तमोऽङ्क षष्ठाङ्ककोष्ठादधस्तनकोष्ठे स्थाप्य, ततस्तत्र तृतीयद्वितीयेत्यङ्कद्वयलोपे अवशिष्टोऽष्टमोऽङ्क प्रथमप्राप्तो-ऽवशिष्यते इति तयोस्तत्र लोप त्यक्त्वा तृतीयैकेत्यङ्कद्वयलोपे

अवशिष्टो नवमोऽङ्क सप्तमाङ्ककोष्ठादधस्तनकोष्ठे स्थाप्य, सेयमङ्क-द्वयलोपनिपन्ना षट्कलमेरुपङ्क्तिद्वितीयकोष्ठस्थषष्ठाङ्कनिर्द्धा[रि]त-द्विगुरुयुक्तत्वस्वरूपषट्सङ्ख्याकानां षट्कलभेदानां द्वितीयतृतीय-च[तु]र्थषष्ठसप्तमनवमेतिप्रातिस्विकरूपज्ञापिका षट्कोष्ठात्मिका षट्कल-पताकापङ्क्ति। एवं तत्र प्रथमतृतीयाष्टेत्यङ्कत्रयलोपे उर्वरित-एकोऽङ्क, स च षट्कलमेरुप्रथमकोष्ठस्थैकाङ्कनिर्द्धारितत्रिगुरुयुक्तत्व-स्वरूपैकत्वसङ्ख्याकस्य षट्कलभेदस्य त्रिगुरुयुक्तो भेद प्रथम इति प्रातिस्विकरूपज्ञापक प्रथमकोष्ठेऽस्येवेति सर्व्वमनवद्यम्। अथ षट्कलपताकास्वरूपं लिख्यते। (E) [Vide figure p 92 —Ed]

४७—४८। अथ सर्वलघ्वेकगुरुद्विगुर्वादय कुत्र कुत्र स्थाने पततीति तज्ज्ञानार्थं मात्रापताकामाह॥ उद्दि॥ उद्दिष्टसदृशा-नङ्कान् स्थापय, वामावर्तेन परस्मिन् गृहीत्वा लोपय। एकलोपे एकं गुरुं जानीत, द्वयोस्त्रयाणां लोपे द्वौ त्रीन् जानीत॥ अन्त्याङ्के वामावर्तेन पूर्वाङ्का लोप्या, शेषाङ्का क्रमेण स्थाप्या, तावत्येकगुरुस्थानानि। एवं द्वयो द्वयो पूर्वाङ्कयोर्योगं कृत्वा त्रयाणां त्रयाणां पूर्वाङ्काणां योगं कृत्वा लोपय॥ मेरुगत यावत्सङ्ख्य कार्यं, द्वित्र्यादिलोपे द्विगुरुत्रिगुर्वादिका भेदा बोध्या। एवं सर्वत्रात्याङ्क सर्वलघुर्भेदो ज्ञेय, एवमग्रेऽपि। एकत्र लिखितं ग्राह्य पुनरन्यत्र नो लिखेदित्यपि बोध्यम्।

इदं षट्कलप्रस्तारे योज्यते यथा, १, २, ३, ५, ८, १३, वामा-वर्तेनात्याङ्के शोध्या। यथा, शेषाङ्के त्रयोदशसु मध्ये अष्टादिशोधने कृते शेषांका ५, ८, १०, ११, १२, इयमेकगुरुस्थानसङ्ख्या॥ एव

अह वित्तस्स लहुगुरु आणं।[१]

पुच्छल[२] च्छंद[३] कला कइ[४] पुच्छल[२] अंक[५] मेटाव[६]।
अवसिट्ठे[७] गुरु जाणिअहु[८] लहु जाणिव्वहु ताव[९]॥ ४९॥
दोहा॥

---

द्वयोर्लोपे द्विगुरुर्यथा। पञ्चाष्टयोस्तयोद्‌यस्तु न लोप शून्यशेषत्वात्। त्र्यष्टलोपे शेष २, षष्ठलोपे ३, एकाष्टलोपे ४, त्रिपञ्चलोपे न, तच्छेषस्य पञ्चरूपस्य पूर्वं गतत्वात्। द्विपञ्चलोपे ६, एकपञ्चलोपे ७, एकत्रिलोपे ९, एतावति द्विगुरुस्थानानि॥ त्रयाणामेकत्र्यष्टरूपाणा लोपेन १, इद त्रिगुरुस्थ[ानम्।] [Vide figure p 92—Ed]

सप्तकले— एक सर्वलघु, षडेकगुरवो, दश द्विगुरवश्चत्वारस्त्रि-गुरव इति मेरुगतभेदास्ते चैषु स्थानेषु वामावर्त्तेन सर्वलघ्वेकगुरु-द्विगुरुत्रिगुरुरूपा भेदा बोध्या। विषमकले सर्वगुरुर्भेदो नास्त्येव॥ एवमग्रेऽपि सर्वत्र बोध्यम्॥ अष्टकला पताका।—अत्राष्टकले एक सर्वलघु, सप्त एकगुरव, पञ्चदश द्विगुरव, दश त्रिगुरव, एक सर्वगुरुरिति मेलितास्त्रतुस्त्रिंशत्॥ नवकला पताका।—अत्रैक सर्वलघुरष्टावेकगुरव एकविंशतिर्द्विगुरवो विंशतिस्त्रिगुरव, पञ्च चतुर्गुरव इति सर्वे पञ्चपञ्चाशद्भेदा मेरुस्था बोध्या॥ (G)

[The figures for seven, eight and nine kalas are similar in shape to the figure given in p 92 The ingenious reader may make them for himself if he likes—Ed]

---

४९। १ अथ वृत्तस्य लघुगुरुज्ञान (A) २ पञ्चल (A), पुञ्चल (L & F) ३ छन्द (A, L & F) ४ कला एव करि (E) ५ वण (E & F) ६ मिटाव (F) ७ अवसिट्ठ (F) ८ जाणिअह (A), जाणिअ (F) ९ जानिब्ब उताव (A, L & F)

४८। इदानीं मात्रावृत्तेर्वा वर्णवृत्तेर्वा कियन्तो गुरवः कियन्तो लघव इति ज्ञानार्थमाह पुच्छलेति। पृष्टच्छन्द कलाः कृत्वा पृष्टवर्णान् लोपय। अवशिष्ट गुरु जानीहि लघवो ज्ञायन्ता तावन्त इति॥ गुरो[र]वशिष्टा यावन्तस्तावन्तो लघव इत्यर्थः। उदाहरणेनास्यार्थं स्पष्टीक्रियते। पढम बारह मत्तेति—कियन्तो लघव कियन्तो गुरव इति प्रश्ने, सर्व्वलघव कर्त्तव्या, तेन ५७ सप्तपञ्चाशत कला भवन्ति, तत्र पृष्टच्छन्दसो वर्णा कर्त्तनीया-भवन्ति, ३७ सप्तत्रिंशद्वर्णा अत्र सन्ति, सप्तपञ्चाशदङ्के सप्तत्रिंशत्-कर्त्तने विंशत्यङ्कोऽवशिष्यते, तेन विंशतिर्गुरवोऽत्रेति ज्ञायते। गुरोश्च द्विकलत्वाद्विंशतिगुरुभिश्चत्वारिंशत् ४० कला गता, ५७ सप्तपञ्चाशन्मध्ये ४० चत्वारिंशल्लोपे १७ सप्तदश अवशिष्टास्तेन सप्तदश लघव इति ज्ञायते। अथवा सर्व्वलघूकृताङ्के योऽङ्क कर्त्तित तत्रैव गुरोरङ्ककर्त्तनेनावशिष्टाः लघवो ज्ञेया, यथात्र सप्तपञ्चाशदङ्के ३७ सप्तत्रिंशत्कर्त्तनेन विंशतिर्गुरवो ज्ञेया, सप्तत्रिंशदङ्के च विंशतिकर्त्तनेनावशिष्टा सप्तदश लघवो ज्ञेया। एव वर्णवृत्तेऽपि, यथा प्रमाणिकाच्छन्दसि सर्व्वलघूकरणेऽष्टचत्वारिंशत् ४८ कला-भवन्ति, तत्र च श्लोके द्वात्रिंशद्वर्णा ३२ भवन्ति, अष्टचत्वारिंश-दङ्के ४८ द्वात्रिंशल्लोपे ३२ षोड़शलाभात् षोडशात्र गुरव इति ज्ञायते, अवशिष्टाश्च षोड़श लघव इति ज्ञायते। (C)

४८। अथैतावत्सङ्ख्याककलाविशिष्टैतावत्सङ्ख्याकाक्षरचरणे वृत्ते कति गुरव कति लघव इति कौतुकात्केनचित्पृष्टे उत्तरप्रकार-माह, पुच्छलेति। पुच्छल छन्द कला—पृष्टच्छन्द कलायाम्, अत्र

कलापदस्य कलासख्यापरत्वात्पृ[ष्ट]च्छद कलासख्यायामित्यर्थ । यस्य गुरुलघुजिज्ञासा तत्पृष्ट छदस्तस्य या मात्रासख्या तन्मध्ये इत्यर्थ । पुछल [अक] छद — पृष्ट छद, अत्रापि छद पदस्य छदोऽचर-सख्यापरत्वात्पृष्टच्छदोऽचरसख्यामित्यर्थ । मेटाब — हीना कुरु । एव करि — [एव] कला एव कृते सतीत्यर्थ । अवसिट्ठउ — अवशिष्टा सख्येति शेष, कलासख्यामध्योर्वरिता सख्येत्यर्थ, गुरु जानिअऊ — गुरोर्ज्ञातव्या, उताव — उवरिता गुरुसख्यातिरिक्ता वृत्ताचरसख्येति यावत् । लघु जाणिअ — लघोर्ज्ञातव्या । यथा अष्टादशकलाविशिष्टै-कादशाचरचरणे वृत्ते कति गुरवो लघवश्चेति पृष्टे, अष्टादशरूप-कलासख्यामध्ये एकादशरूपाचरसख्यालोपे उर्वरिता सप्तसख्या, सा गुरुसख्या ज्ञेया । एकादशाचरमध्ये यदि सप्त गुरवस्तदोर्वरिता चतुष्टसख्या, सा लघोर्ज्ञातव्या, एव चैतादृशचरणे वृत्ते सप्त गुरव-श्चत्वारो लघव इत्युत्तर देयमिद च वृत्तमिन्द्रवज्राख्यमेवमन्यत्रा-प्यूह्यम । (E)

४९ । अथ छन्दसु गुरुलघुमात्रावर्णयत्ताज्ञानोपायमाह ॥ पुच्छेति ॥ पृष्टस्य छदस कला कुरु, पृष्टे वर्णान् लोपय । अव-शिष्टा गुरवो ज्ञायते, लघवो ज्ञातव्या उर्वरिता ॥ पृष्टे कलास-ख्यायामित्यर्थ, वर्णादीना तद्गतसख्योच्यते ॥ यथास्यैव छदस मात्रासख्या ४८, वर्णसख्यया २५ ऊनिता जाता १३, एतावती गुरुसख्या ॥ इयमेव वर्णसख्योनिता जाता २२ लघुसख्या, इयमेव १३ गुरुद्विगुणसख्यया २६ मिलिता जाता मात्रासख्या ४८, इयमेव गुरुसख्योनिता वर्णसख्या २५ इति ॥ ४९ (G)

[Compare this with Pingala s Sanskrit aphorisms, and the learned commentary of Halayudha thereon, also with a symbolical exposition of the same in Ghosha s छन्दःसारसंग्रह p 34, paras 2, 3 and 4 —Ed ]

[Between ४९ and ५०, the following slokas are inserted in MS (F) This is apparently a later addition, for their enumeration even is not subsequently adhered to —Ed ]

मत्तासंख्ये कोठ करु पती छक्क पयारि।
तत्थ दुआदिक अंक धरु पढमहि पंति बिचारि॥ ५०।
आइ अंक परिज्जि कऊ सब्बहि पती मझ्झारि।
पुब्ब जुअल सरि अंक धरु बीजौ पंति बिचारि॥ ५१।
पढम पंति ठिअ अंक करि बीजौ पंति गुणेहि।
जो जो अंका उब्बरइ ते तीय पंति भरेहि॥ ५२।
बि पिट्ठइ भेअ जोअइ अंका लहुआ कोट्ठा पूरइ अंका।
पूआ लहुआ हारा तेक्खइ पिंगल जंपे बण्णा दुअइ॥ ५३।
छ पंती पत्थार करिज्जसु अक्खरसंख कोट्ठ धरिज्जसु।
पहिलौ पंति बण्ण धरिज्जसु दुसरौ पंति दूण करिज्जसु॥ ५४।
अक्खर अंक गुणित करि लेहि चौ[चउ]थौ पंति सोइ लिहि देइ।
चौथौ अद्धा पंचम पंति सोइ छट्ठ मिलिऊ णिब्भंत॥ ५५।
पंचमी चौथौ तिअहि मिलाउ पिंगल जपइ अंक फलाउ।
वित्त भेअ मत्त अरु बण्णह गुरु लहू एम संपण्ण ह॥ ५६॥
अक्खर मक्कइ जाणऊ लोइ जे जाणे मण आणंद होइ।
जो बुज्झइ सोइ पै बुज्झइ मक्कइ जाल हत्थि बि रुज्झइ॥ ५७।

[The corresponding gloss in commentary (G) runs thus —Ed ]

अथ प्रस्तारसंख्या ।

मात्रासंख्यान् कोष्ठान् कुरु पङ्क्तिषट्कं प्रस्तारय, तत्र द्व्यादिकानन्कान् धारय प्रथमपङ्क्तिविचार । द्व्यादिकोष्ठेषु द्व्याद्यङ्का लेख्या इति प्रथमपङ्क्तेर्विवेक ॥ ५० ॥ आद्यङ्कपरित्याग कथयतु सर्वासां पङ्क्तीनां मध्ये पूर्वयुगलसदृशानङ्कान् धारय, द्वितीयपङ्क्तिविचार । उद्दिष्टवदङ्का लेख्या इति द्वितीयपङ्क्तिविचार इत्यर्थ ॥ ५१ ॥ प्रथमपङ्क्तिस्थिताङ्के कृत्वा द्वितीयपङ्क्तिं गुणय। यो योऽङ्क उत्पद्यते तेन तृतीयपङ्क्तिं भरय ॥ ५२ ॥ अथ पञ्चमपङ्क्तिपूरणं, विपि । अत्राकशब्दस्य व्यत्यासेन योजनाद्वौ पृष्टाङ्कौ भेदाङ्क च योजय । लघुके कोष्ठान् पूरय अङ्के । पृष्टाङ्कद्वयं भेदाङ्के चैकीकृत्य पञ्चमपङ्क्तिकोष्ठा पूरणीया, ते लघुसंख्याका भवतीत्यर्थ । यथा । तत्र प्रथमे कोष्ठे पूर्वाङ्कयो पूर्वोर्द्धाङ्कसंख्याप्रभेदाङ्कस्य चाभावादेक एव ॥ द्वी[द्वि]तीये कोष्ठे पूर्वाङ्क एकस्तदूर्द्धसंख्याभेदाङ्कस्यैकस्तयोर्योगे द्वय ॥ तृतीये कोष्ठे पूर्वाङ्कयुगल १ । २ ऊर्द्धप्रभेदाङ्कयोर्योगे पञ्च ५, तत्तृतीये लेख्या ॥ चतुर्थकोष्ठे पूर्व्वाङ्कयुगल २, ५ पूर्वोर्द्धाङ्क वृत्तभेदाङ्कस्य तद्योगे दश ॥ एवमग्रेऽपि। अथ षष्ठपङ्क्ति पूर्णा इति। पूर्व्वौ लघुकौ हार, लघुद्वय गुरुर्भवतीत्यर्थ, यथा प्रथमकोष्ठे लघुद्वयाभावाद्गुरुस्थाने शून्य, द्वितीयकोष्ठे एक १ तृतीये द्वौ २ चतुर्थे ५ इत्यादि षष्ठपङ्क्तिपूरण ॥ अथ चतुर्थपङ्क्ति । तेक्खह । तथा पिंगलो जल्पति वर्णान्दाभ्यां । गुरुलघुयोगे वर्णा भवतीति चतुर्थपङ्क्तिपूरणम् । इति मात्रामर्कटी ॥ ५३ ॥

मात्रामर्कटीचक्र यथा,—

| वृत्त | १ | २ | ३ | ४ | ५ | ६ |
|---|---|---|---|---|---|---|
| प्रभेद | १ | २ | ३ | ५ | ८ | १३ |
| मात्रा | १ | ४ | ९ | २० | ४० | ७८ |
| वर्ण | १ | ३ | ७ | १५ | ३० | ५८ |
| लघु | १ | २ | ५ | १० | २० | ३८ |
| गुरु | ० | १ | २ | ५ | १० | २० |

वर्णमर्कटीचक्र यथा,—

| वृत्त | १ | २ | ३ | ४ | ५ | ६ |
|---|---|---|---|---|---|---|
| भेद | २ | ४ | ८ | १६ | ३२ | ६४ |
| मात्रा | ३ | १२ | ३६ | ९६ | २४० | ५७६ |
| वर्ण | २ | ८ | २४ | ६४ | १६० | ३८४ |
| गुरु | १ | ४ | १२ | ३२ | ८० | १९२ |
| लघु | १ | ४ | १२ | ३२ | ८० | १९२ |

अथ वर्णमर्कटी। छ पती। षट्पक्ति प्रस्तार कुरु, अच्चर-सख्यान् कोष्ठान् धारय, प्रथमपक्तौ वर्णान्धारय, द्वितीयपक्तौ द्विगुणान् कुरु ॥ ऊर्द्धाध षट्पक्तयो लेख्यास्तिर्यग्वर्णसख्या कोष्ठा कार्या, तत्र प्रथमपक्तौ वर्णाका, द्वितीयपक्तौ उद्दिष्टवद्द्विगुणा-अका लेख्या ॥ ५४ ॥ अकव। अच्चराकैर्गुणिता कला [जा]ता चतुर्थी पक्तिस्तया[सा] लेख्या। चतुर्थ्यर्धा पचमी पक्ति, सैव षष्ठे मिलिता निश्चयात ॥ प्रथमपक्त्यकैर्द्वितीयपक्त्यकान् गुणयित्वा चतुर्थी पक्ति-र्लेख्या, तदर्धे पचमी, तथैव षष्ठी पक्तिर्भवतीत्यर्थ ॥ ५५ ॥ पच-मीति। पचमीचतुर्थ्यास्तृतीयामेलने पिगलो जल्पति अकान् प्रस्ता-रय। चतुर्थीपचमीपक्तियोगेन तृतीया पक्तिर्भवतीत्यर्थ । वृत्तानि भेदा मात्रा अन्यद्वर्णा गुरवो लघव एव सपन्न भवति ॥ ५६ ॥ अच्चरमर्कटी जानतु लोका य[ज्]ज्ञाने मनस आनदो भवति। यो बुध्यते स एव बुध्यते, मर्कटीजाले हस्ती अपि रुध्यते। दुर्गमेति भाव ॥ ५७ ॥ (G)

[Both the figures run to inconvenient lengths in the commentary, the portions here reproduced will enable the reader to extend them as far as he would like —Ed ]

अह सकल पत्थार संखा ।

छव्वीसा[1] सत्तसआ

तह[2] सत्तारह सहस्साइं[3] ।

बाआलीसं[4] लक्खं[5]

तेरह कोडी[6] समग्गाइं[7] ॥ ५०[8] ॥ गाहू ।

---

५० । अत्र चैकाक्षरमारभ्य षड्विंशत्यवधिवर्णवृत्तानां प्रस्तारे कियती संख्येत्यत्राह १३४२१७७२६ षड्विंशति सप्तशतानि तथा सप्तदशसहस्राणि द्विचत्वारिंशल्लक्षास्त्रयोदशकोट्य समग्राणि, अङ्कस्य वामा गतिरित्यङ्का स्थाप्या । (C)

५० । अथैकाक्षरमारभ्य षड्विंशत्यक्षरपर्यंतसमस्तवर्णवृत्तपिंडी-भूतसंख्यामाह छव्वीसेति । षड्विंशति सप्तशतानि तथा सप्तदश-सहस्राणि द्विचत्वारिंशल्लक्षाणि त्रयोदशकोट्य, एव समग्राणि एकाक्षरादिषड्विंशत्यक्षरपर्यंतानीत्यर्थं वर्णवृत्तानि भवतीति शेष । मात्रावृत्तानामसंख्यातत्वात्तत्संख्या नोक्ता, वर्णवृत्ताना प्रत्येकसंख्या ग्रथविस्तरभयादनतिप्रयोजनत्वाच्चास्माभिरत्र नोक्ता । (L)

५० । अथैकादिषड्विंशत्यताना वर्णवृत्ताना भेदैक्यसंख्यामाह, छव्वी । षड्विंशति सप्तशतानि तथा सप्तदशसहस्राणि द्विचत्वारि-शल्लक्षाणि त्रयोदशकोटय समग्राणि । एतावत सर्वे भेदा इत्यर्थं ।

---

५० । छविसा (C), छवीसा (D) २ तहा (A), तह (D) ३ सहस्साइ (A & D), सहस्साइ (B & C) ४ बाआरीस (A) ५ रक्ख (C), लक्खख (D) ६ कोडी (B, C & D) ७ समग्गाइ (C), समग्गाइ (D) ८ ४८ (A)

## अथ गाथाप्रकरणम् । (D)

होइ गाह मत्त चउअस[1] गाहाइ[2] सत्तावणिअ[3],
तह[4] बिग्गाह[5] पलट्टि किज्जइ[6] उग्गाहउ[7] सट्ठिकल[8],
गाहिणीअ[9] बासट्ठि[1] किज्जइ[11] ।
तह बि पलट्टइ[12] सिंहिणी[13] बे अग्गल[14] हो सट्ठि[15] ।
सत्तरूअ[16] असीस[17] गुण[18] खंध[19] मत्त चउसट्ठि[2] ॥
५१[21] ॥ रड्डा ।

---

द्व्यादिषड्विंशतिपर्य्यंत पूर्वपूर्वद्विगुणाकाना योगे एतावतो भेदा-दिति ॥ (G)

५१ । अथ गाथादीना लक्षण विवक्षु तत्र मात्राविषमलमाह । भवति गाहस्तु पञ्चाशन्मात्रा ५४, गाथा सप्तपञ्चाशन्मा[त्रा] ५७, तथा विगाथा वैपरीत्येन क्रियते,—गाथाद्वितीयार्द्धलक्षण प्रथमार्द्धे, प्रथमार्द्धलक्षण द्वितीयार्द्धे,—उद्गाथा षष्टिपरा ६०, गाहिन्या द्विषष्टि दी[क्रि]यता ६२। तथैव परिवर्त्त्य सिंहिनी द्वयाग्रा भवति

---

५१। १ चउअअस (B), चउअस (C) चौअस (E & F) २ तह गाहा (A), तह गाहाइ (E) ३ सत्तावणी (A & D), सत्तावस (E), सत्तावणइ (F) ४ वेहि (E) ५ विग्गाहउ (B & C) ६ किज्जअ (B & C, किज्जिअइ (E) ७ उग्गाहाउ (D) उग्गाह (F) ८ सट्ठिपर (B & C), सट्ठिकला (F) ९ गाहिणिअ (E), गाहणिअ (F) १ वासठि (E), सावट्ठि (F) ११ कह मतह (E) १२ पलटे (D), पलट्टिअ (E), पलटइ (F) १३ सीहिणी (A), सिंहिणी (C), सिंघिणी (D), सिंहिसा (E), १४ अग्गा (A & B), अग्ग (C) १५ होइ (A & E) १६ सत्तरूअ (D & E), होइ सारुअ (F) १७ असीए (C), असीण (D) १८ गुम (D), गुण (E) १९ खन्द (B), खन्ध (C) २० चासट्ठि (D), चौसट्ठि (E & F) २१ ४९ (A), ५१ (F)

षष्टिमात्रा, [सप्त]रूपकाणि अन्योऽन्यगुणानि, खन्धके मात्रा चतु-षष्टि । परिवर्त्त्येति । पूर्व्वार्द्धपरार्द्धयोर्व्यत्यासे गाथैव विग्गागा[था] भवतीत्यर्थ, गाहिन्या पूर्व्वार्द्धपरार्द्धयोर्व्यत्यासे सिंहिनी, तत्रापि द्विषष्टिमात्रा भवन्तीति स्पष्टार्थमाह, यथा द्व्यधिकेत्यर्थ । रूपकाणि छन्दांसि अन्योन्यगुणयुक्तानि, तेन सर्व्वाण्येव प्रथमतृतीयपादद्वादश-मात्रत्वादियथागुणानीत्यर्थ ॥ (C)

५१ । अथ पुरस्ताद्वक्ष्यमाणाना गाहूप्रभृतिसप्तमात्राच्छन्दसा सामान्यतश्चरणचतुष्टयसमुदिता सख्या रड्डावृत्तेनोद्दिशति, होइ गाहू इति । गाहूनामके छन्दसीत्यर्थ, मत्त चौअण्ण — मात्राश्चतु-पञ्चाशत्, होइ — भवति, तह गाहाइ सत्तवण्ण — तथा गाथाया सप्तपञ्चाशत् मात्रा भवतीति पूर्वानुषग, तेहि — ता गाथा पलट्टि — परावर्त्य, गाथाया पूर्वार्द्धम उत्तरार्द्धं कृत्वा उत्तरार्द्धं [च पूर्वार्द्धं] कृत्वेत्यर्थ, विग्गाह — विगाथा, किज्जिअइ — क्रियते । अत्र तेहि इत्येकारो ह्रस्वो बोध्य एओ सुद्धा अ वण्ण मिलिआ वि लहू इत्युक्तत्वात [Vide ५म श्लोक p 7 — Ed ] उग्गाहउ — उद्गाथा छट्ठिकला — षष्टिकला षष्टि कला मात्रा यस्या सेत्यर्थ, गाहि-णिअ — गाहिन्या, बासट्ठि — द्विषष्टि, मत्तह — मात्रा करु — कुरु, तह वि पलट्टिअ — तद्विपरीतायाम तस्या गाहिन्या विपरी-तायामित्यर्थ सिंहिणी — सिंहिन्यां, बे अग्गल — द्व्यधिका, सट्ठि षष्टि मात्रा इत्यनुषग, होइ — भवति, अत्र हो इत्योकार पूर्वोक्तदिशा ह्रस्वो बोध्य । अत्र क्वचित् तह गाहाइ सत्ता[त्ता]-वण्णी इति, तह विग्गाह पलट्टि किज्जइ इति च पाठ, स रड्डा-

अथ गाह्न । (F)

पुव्वद्धे[1] उत्तद्धे सत्तगला[2] मत्त बीसाइँ[3] ।
छट्ठमगण पअमभ्म्झे[4] गाह्न मेरुव्व जुअलाइँ[5] ॥ ५२[6] ॥

गाह्न ।

---

लक्षणविरुद्धत्वादुपेक्ष्य । खध — स्कधके, मत्त चौ[चउ]सट्ठि — मात्रा चतु षष्टिर्भवतीत्यनुषग । एतानि सत्तरुअ — सप्तरूपकाणि ह्रदासि, अखोखगुण — अन्योऽन्यगुणानि, अन्योऽन्य गुणा षष्ठजगणनलघ्वेक-लघु-पादातगुर्वादयो येषा तादृशानीत्यर्थ, भवतीत्यनुषग, इति योजना ॥ (E) [Vide Ghosha s Compendium, p 7 —Ed ]

५१ । अथ मात्राजातीना कासाचित्कलासख्यामाह । होइ । भवति गाह्नमात्रा चतु पचाशत्, गाथाया सप्तपचाशदेव, तथा विग्गाहा परावर्त्य क्रियते, उग्गाया षष्टिकला, गाहिन्या द्वाषष्टि क्रियते । तथा विपरिवर्त्तते सिहिनी, भवति सप्त-रूपाणि ह्रदासि अन्योऽन्यगुणा स्कधके मात्रा चतु षष्टि ॥ अन्योऽन्येति गु[ग]णेति पाठे सप्तगु[ग]णा अन्योऽन्यसवलिता-भवतीत्यर्थ ॥ ५१ ॥ (G)

---

५२ । १ पुव्वेद्धे (B), पूव्वद्दे (C), पुव्वर्द्धे (E) २ सत्तगण (B & C), सत्तगल (D) ३ बीसाइ (B & F), dropt in (C), बीसाइ (D), बीसाइ (E) ४ पअमजभ्मे (B & C), पअमज्झे (F) ५ जुगलाइ (B), जुअलाइ (E) जुअलाइ (F) ६ ५० (A), ५१ (F)

---

५२ । अथ गाहलक्षणमाह । पूर्व्वार्द्धे उत्तरार्द्धे सप्तोत्तरविंश माचा २७ । षष्ठगणेत्यादिमध्ये गाह्न मेरोरेव युगल ॥ तेन पूर्व्वार्द्धे एको लघुरेव षष्ठो गण, एवमुत्त[त्तरा]र्द्धेऽपि । प्रथमपादे द्वादश माचा द्वितीये पञ्चदशेति मिलित्वा सप्तविंशतिमाचा पूर्व्वार्द्धे, एवमुत्तरार्द्धेऽपि, अ[य]म्न विशेष पादमध्येस्थितषष्ठगणे मेरोरेव युगल, मेरुपदेन लघुरुच्यते, मिलित्वा लघुयुगल, तेन पूर्वार्द्धे एकलघुरेव षष्ठो गण, एवमुत्तरार्द्धेऽपि । एतादृशलक्षण यत्र सा गाहरित्यर्थ ॥ (C

५२ । अथ गाह्नप्रभृतिसप्तच्छन्द सु सामान्यतो माचा उद्दिश्य विशेषतस्तानि लिलक्षयिषु प्रथम गाह्न लक्षयति पुब्बद्धे इति । यत्र पुब्बद्धे उत्तद्धे — पूर्वार्द्धे उत्तरार्द्धे, पअमज्झे — पादयोर्मध्ये पूर्वार्द्धे प्रथमद्वितीयपादयोर्मध्ये, उत्तरार्द्धे तृतीयचतुर्थयो पाद-योर्मध्ये इत्यर्थ । सत्तगल — सप्ताधिका, मत्त वीसाइ — माचा विंशति, सप्तविंशतिर्माचा इत्यर्थ, पततीति शेष, छट्ठमगण — षष्ठो गण, मेरुब्ब जुअलाइ — मेरो युगल, मेरुर्लघुस्तद्युगल-मित्यर्थ । पूर्वार्द्धे उत्तरार्द्धे च प्रत्येक गुर्वेता सप्तगणा स्थाप्या स्तत्र षष्ठस्थाने एको लघ्वात्मको गण स्थाप्य, अन्यत्र चतुर्मात्रिक-इत्यर्थ, एव च षसा चतर्मात्रिकगणाना चतुर्विंशतिर्माचा, एका च माचा षष्ठस्थानस्थलघोर्माचाद्वय चातस्थगुरोरेवमत्र सप्तविंशति-माचा पूर्वार्द्धे उत्तरार्द्धे च प्रत्येक पतति, तद्गाह्ननामक छद-इति निर्गलितार्थ । (E)

जहा, चंदो चंदण[1] हारो ताबश्र[2] रूश्रं[3] पश्रासंति[4] ।
चंडेसरवर कित्ती[5] जाव ण अप्पं णिदंसेइ[6] ॥ ५३[7] ॥

गाह्न ।

५२ । अथ गाह्न ॥ पूर्वार्धे उत्तरार्धे सप्ताधिका मात्रा विंशति । षष्ठो गण पदमध्ये गाह्न मेरु एव युगलाप्य ॥ युगे द्वे ४ [?] द्वये। सपूर्णपद्यमध्ये षष्ठएव मेरु कार्यो नान्यत्रेति भाव ॥ ५२ ॥ (G)

५३ । चन्द्रश्चन्दन हारस्तावद्रूप प्रकाशयन्ति । चण्डीश्वरवर-कीर्त्तिर्यावन्नात्मान निदर्शयति ॥ तत्कीर्त्त्यग्रे तेषा निष्प्रभत्वमिति व्यज्यते । (C)

५३ । गाह्नमुदाहरति, चदो इति । चद्र चदन हारो मुक्ता-दाम, एते तावद् रूप स्वकाति प्रकाशयति । चडेश्वरवरकीर्त्ति जाव — यावत्, अप्प — आत्मान स्व, न [ण] णिश्रसेइ — न निदर्शयति प्रकटयति ॥ (E)

५३ । यथा चद्रश्चदन हारस्तावद्रूप प्रकाशयति । चडेश्वरस्य वरा कीर्त्तिर्यावदात्मान न दर्शयति ॥ ततोऽपि कीर्त्तिर्धवले-त्यर्थ । ५३ ॥ (G

५३ । १ चन्दो चन्दण (B & C) २ तावइ (A), ताव (D) ३ रूश्र (B) ४ पश्रासति (D) पश्रासेइ (F) ५ कित्ति (A) ६ जावन्न अप्प निदसेइ (B), जाव अप्प ण दसेइ (D), जाव ण अप्प णिश्रसेइ (E) जाव अप्पाण ण दसेइ (F) ७ ५२ (F), ५१ (A)

## अथ गाहा । (I)

**पढमं बारह मत्ता बीए अट्ठारहेहिँ[1] संजुत्ता ।**
**जह पढमं तह तीअं दहपंचविह्लसिआ[2] गाहा ॥ ५४[3] ॥**

---

५४ । गाथामाह । प्रथमे द्वादश मात्रा द्वितीयेऽष्टादशभि सयुक्ता । यथा प्रथम तथा तृतीय दशपञ्चविभूषिता गाथा ॥ पञ्चदशेति — अर्थाच्चतुर्थचरणे पञ्चदशमात्राभूषिता भवतीत्यर्थ ॥ (C)

५४ । अथ गाथा लक्षयति पढममिति । यत्र पढम — प्रथममाद्यचरणे इत्यर्थ, बारह मत्ता द्वादशमात्रा पततीति शेष, या च बीए — द्वितीये चरणे इत्यर्थ, अट्ठारहेहि — अष्टादशभि मात्राभिरिति शेष, सजुत्ता — सयुक्ता । यस्याश्च जह पढम तह तीअ — यथा प्रथमस्तथा तृतीय चरण इति शेष, द्वादशमात्रायुक्त इत्यर्थ, या च चतुर्थे चरणे इति शेष, दहपचविह्लसिआ — पचदशभिर्मात्राभिरिति शेष विभूषिता, सा गाहा गाथानामक छन्द इत्यर्थ । (E)

५४ । अथ गाथा ॥ पढ ॥ प्रथमो द्वादशमात्रो, द्वितीयोऽष्टादशभि सयुक्त । यथा प्रथमस्तथा तृतीयो दशपचविभूषिता गाथा ॥ चरण इति शेष ॥ चतुर्थ पचदशमात्र इत्यर्थ ॥ [पथ्या] आर्येय सस्कृते ॥ ५४ ॥ (G)

---

५४ । १ अट्ठारएहि (A), अट्ठारहेइ (C), अट्ठारहेहि (D & E), अट्ठारहेहि (F) २ विह्लसिआ (D) ३ ५९ (A), ५४ (E & F)

जहा, जेण विणा ण जिविज्जइ[1]
अणुणिज्जइ सो कआवराहोवि[2] ।
पत्ते वि णअरडाहे[3]
भण[4] कस्स ण वल्लहो[5] अग्गी[6] ॥ ५५[7] ॥ गाहा ।

---

५५। येन विना न जीव्यतेऽनुनीयते स कृतापराधोऽपि। प्राप्तेऽपि नगरदाहे भण कस[्य न] वल्लभोऽग्नि ॥ नगरदाहकोऽप्यग्निरावश्यकत्वात् प्रिय एवेति ॥ (C)

५५। गाथामुदाहरति जेणेति। येन [जेण] विणा ण जिविज्जइ — येन विना न जीव्यते स कआवराहोवि — कृतापराधोऽपि, अणुणिज्जइ — अनुनीयते। एनमेवार्थमर्थातरन्यासेन द्रढयति पत्ते वीति। पत्ते वि — प्राप्तेऽपि, णअरडाहे — नगरदाहे, अग्गी — अग्नि, कस्स ण वल्लहो — कस्य न वल्लभ इति भण — वद, अपि तु सर्वस्यापि वल्लभ इत्यर्थ। मानवती काचिन्नायिका प्रति सखीवाक्यमेतत्। अथ च वक्ष्यमाणभेदेषु चूर्णानामको [Vide sloka 60 P 114] दशमो भेद इति बोध्यम् ॥ (E)

५५। यथा ॥ जेणेति ॥ येन विना न जीव्यतेऽनुनीयते स कृतापराधोऽपि। प्राप्तेऽपि नगरदाहे भण कस्य न वल्लभोऽग्नि ॥ ५५॥ (G)

---

५५। १ जिवज्जइ (B & C) २ कवराहो (D) ३ णअरडाहे (E) ४ सहि (E) ५ वल्लभो (B & C) ६ अग्गि (A) ७ ५२ (A), ५५ (E & F)

सत्तगणा दीहंता[1] जो णलहू[2] छट्ट णेह जो बिसमे[3] ।
तह गाहे बिअ अद्धे छट्टं लहुअं बिआणेहु ॥ ५६[4] ॥

---

५६ । इदानीं गाथाया विशेषान्तरमाह, सप्तगणा दीर्घान्ता यो-[जो] नलघु षष्ठ, नेजाजा[नेह जो] विषमे तथा गाथाया द्वितीयार्द्धे षष्ठ लघुक विजानीहि ॥ अत्र चतुष्कलो गण । पूर्व्वार्द्धे तादृशा सप्तगणा कार्य्या, अन्ते दीर्घो गुरु कार्य्य, जगणो [न]लघुर्वा षष्ठोगण कार्य्य । इह गाथाया विषमे एकादौ जगणो न देय । (C)

५६ । अथ गाथाया मात्रानियममुक्त्वा गणनियममाह सत्तेति । गाहे — गाथाया, सत्तगणा दीहता — सप्तगणा दीर्घाता दीर्घो-गुरुस्तदता भवति । अत्र विशेषपरोऽपि दीर्घशब्द सामान्यगुरु-परो ज्ञेय, एव च पूर्वार्द्धे उत्तरार्द्धे च गुर्व्वतास्चतुर्मात्रिका सप्त गणा कर्त्तव्या इत्यर्थ, इह इत्यग्रेतनस्यानुकर्ष, इह गाथाया छट्ठ — षष्ठ गण, जो णलहू — जो जगण गुरुमध्य, नलघू लघुयुक्तो नगणो वा भवति, कर्त्तव्येषु गुर्व्वतसप्तगणेषु षष्ठो जगणश्चतुष्कल [?] नगणो वा देय इत्यर्थ । णेह जो बिसमे — इह गाथाया विषमे [प्रथमे] तृतीये पचमे सप्तमे च स्थाने इत्यर्थ, यो [जो] जगणो गुरुमध्यो न पततीत्यर्थ, तह — तथा, बिअ अद्धे — द्वितीयार्द्धे छट्ठ लहुअ बिआणेहु — षष्ठ गण लघुकम् एक-लघुरय विजानीत, एव च पूर्वं नलघुजगणयोरन्यतरदान पूर्वा-

---

५६ । १ दीर्घान्ता (B & C) २ णलहू (F) ३ विषमे (B & C)
४ ५७ (A), ५६ (E & F).

**सव्वाए गाहाए सत्तावस्साइं[१] होंति[२] मत्ताइं[३]।**
**पुव्वद्धम्मि[४] अ तीसा सत्ताईसा[५] परद्धम्मि[६] ॥ ५७[७] ॥ गाहा।**

---

द्धाभिप्रायेणेति प्रतीयते, तथा च मध्यलघु[गुरु]गण लघुसंयुक्तो-नगणस्त्रिलघ्वात्मको वा लगण पूर्वार्द्धे षष्ठे विधेय, उत्तरार्द्धे च एकलघ्वात्मक एव षष्ठोगणो विधेय इति भाव । (E)

५६। सत्तेति। सप्तगणा दीर्घान्ता जगणो नलघू षष्ठो नेह जो विषमे। तथा गाथाया द्वितीयार्द्धे षष्ठ लघुक विजानीत ॥ प्रथमार्द्धे त्रिंशन्मात्रा तत्र षष्ठो जगणो नलघू वा कार्यो, विषमे स्थाने द्वितीयचतुर्थादौ [प्रथमतृतीयादौ] जगणो न कार्य । द्वितीये षष्ठो लघुरेव कार्य, शेषे पूर्वा [?] ॥ ५६ । (G)

५७। पढम बारह मत्तेत्यनेन उक्तमर्थं स्पष्टीकर्त्तुमाह। सर्व्वस्या गाथाया सप्तपञ्चाशद्भवन्ति मात्रा । पूर्व्वार्द्धे च त्रिंशत् सप्तविंशति परार्द्धे। सप्तपञ्चाशतो विभागमाह पूव्वद्ध इत्यादिना। केचित्तु श्लोकोऽय काल्पनिक इति मन्यन्ते, परे तु द्विपद्यपि गाथा भवतीति बोधयितु पुनरिदमुक्तम। (C)

५७। अथ गाथाया वर्त्तमानषड्विंशतिविधाया समुदितमात्रा-नियममाह, सव्वाए इति। पुव्वद्धम्मि अ तीसा — पूर्वार्द्धे त्रिंशत् परार्द्धे उत्तरार्द्धे इत्यर्थ, सत्ताईसा — सप्तविंशति । एव प्रकारेण

---

५७। १ सत्तावण्णाइ (A & B), सत्तावण्णाई (D) २ होंति (D) ३ मत्ताइ (C) मत्ताई (D) ४ पूर्व्वद्धम्मि (B), पूव्वद्धम्मि (C) ५ सत्ताइसा (A) ६ पच्छद्धाए (A), पच्छद्धाए (B & C) ७ ५५ (A), ५० (E & F)

सत्ताईसा[1] हारा[2] सल्ला जस्सम्मि[3] तिरिण[4] रेहाई[5]।
सा गाहाणं गाहा आआ तीसक्खरा[6] लच्छी[7] ॥ ५८[8] ॥

सव्वाए गाहाए—सर्वस्या गाथाया सत्तावणाइ—सप्तपञ्चाशत् मत्ताइ—मात्रा होंति—भवन्तीत्यर्थ। पूर्वार्धे षष्ठे चतुर्मात्रिकस्य जगणस्य लघुयुक्तनगणस्य वा दानात्त्रिंशन्मात्रा पतति, उत्तरार्द्धे च षष्ठस्थाने एकलघ्वात्मकस्यैव गणस्य दानात्तदपेक्षया मात्रात्रय न्यून भवतीति सप्तविंशतिमात्रा पततीत्यर्थ। (E)

५७। सव्वेति। सर्वस्या गाथाया सप्तपञ्चाशद्भवति मात्रा ॥ पूर्वार्द्धे च त्रिंशत् सप्तविंशति परार्द्धे च ॥ ५७ ॥ (G)

५८। अथ गाथाभेदानाह। सप्तविंशतिर्हारा शल्यानि यस्या त्रीणि राजन्ते। सा गाथाना गाथा आयाता त्रिंशदक्षरा लक्ष्मी ॥ हारा गुरव, शल्यानि लघव, देवाना देव इतिवद्गाथाना गाथेति प्रकर्षार्थमुच्यते ॥ (C

५८। अथानुपदमेव वक्ष्यमाणेषु भेदेषु प्रथम भेद लक्ष्मी-नामक लक्षयति सत्ताइसेति। जस्सम्मि—यस्या, सल्ला—श्ला-[घ्या]घ्या सत्ताइसा हारा—सप्तविंशतिर्दीर्घा गुरव इत्यर्थ, तिरिण रेहाइ—तिस्रो रेखा लघवस्तेत्यर्थ, पततीति शेष, सा गाहाण—गाथानां मध्ये, आआ—आद्या प्रथमेति यावत्, तीसक्खरा—

५८। १ सत्ताइसा (A & E) २ हार (F) ३ जस्सम्म (C) ४ तिन्नि (E)
५ रेहाइ (A & E), रेहेइ (B), रेहेइ (C), रेहोइ (F) ६ तीसक्खरा (A B & D) ७ लच्छी (A, D & E) ८ ५९ (A), ५८ (E & F)

अथ दीपकच्छंदः । (D)

सिर देह[1] चउ[2] मत्त लहु एक्क कर[3] अंत ।
कुतेक्क[4] तसु[5] मज्झ[6] दीपक सो[7] बुज्झ ॥ १८१[8] ॥

१८० । यथा ॥ राज्ञा इति ॥ राजानो भग्ना दिक्षु लग्ना परि-हृत्य हयगज[गृह]गृहिणी । अश्रुभिर्भृत्वा सरोवरान् पदपतित परिकरो लुटति ताडयति तनु धरण्या । पुनरुत्तिष्ठत्यवधार्य्य कृत-दन्तांगुलिर्बालतनयै कृत्वा नमस्कार कारयति, काशीश्वरो राजा स्नेहालुकाय कृत्वा मायां पुन [स]स्थाप्य धृतवान् ॥ परिकर स्त्रीजन ॥ ८० ॥ इति दण्डकलम ॥ (G)

१८१ । अथ दीपकच्छन्द ॥ शिरसि देहि चतुर्मात्र लघुमेक-मन्ते । इन्त एको यस्य मध्ये दीपक तद्बुध्यस्व ॥ शिरसि आदौ, इन्त पञ्चकलो गण । (C)

१८१ । अथ दीपकनामक वृत्त लक्षयति सिर देहेति । सिर—शिरसि आदावित्यर्थ चउ मत्त—चतुर्मात्रिक गण देह—स्थापय, अंत—अंते पादांते लहु एक्क—लघुमेक करु—कुरु, तसु—तयो चतुर्मात्रिकैकलघुकगणयोरित्यर्थ मज्झ—मध्ये कुतेक्क—कुतमेक पचकलमेकमित्यर्थ कुरु इति पश्चात्तनेनान्वय, दीपक सोउ बुज्झ—दीपकनामक [तत्] वृत्त जानीहीत्यर्थ ॥ यच

१८१ । १ देच (B), देउ (C) २ चौ (D) ३ तहु (D), कर (E) ४ कुतक्क (A), दवेक्क (B & C) ५ जासु (C) ६ मंत (A) ७ सउ (B & F), सइ (C), सोइ (D & E) ८ ७१ (A), ८१ (F).

जहा, जसु हत्थ[1] करवाल[2] बीपक्ख[3] कुल काल।
सिर सोह[4] बर छत्त संपुस ससि मत्त[5] ॥ १८२[6] ॥
दीपक। (A B, C & F)

---

प्रथम चतुष्कलस्तत पचकलस्तत एको लघु, प्रतिचरण पतति, तद्दीपकनामक वृत्तमिति फलितार्थ। क्वचित् कुतत्ति तसु मज्झेति पाठस्तत्र अते दलाते एक लघु कुरु, कुतत्ति—कुतत्रय, तसु—तयोस्चतुर्मात्रिकैकलघुकगणयो मज्झ—मध्ये कुरु इत्यर्थ। इद च एकैकदलाभिप्रायेण, अन्यथैकैकपादे चतुष्कलत्रयस्याभावादसभवापत्तिरिति द्रष्टव्य। प्रथम यत्र चतुर्मात्रिकस्तत पचकलत्रय ततो लघु प्रतिदल पतति, तदा [दी]पक वाक्ष इति द्वितीयपाठे निर्गलितार्थ ॥ (E)

१८१। सिर इति ॥ शिरसि देहि चतुर्मात्रा लघुमेक कुर्व्वते। कुतमेक तस्य मध्ये दीपक बुध्यस्व ॥ शिरस्यादौ, कुत पचकल ॥ ८१ ॥ (G)

१८२। उदाहरति। यस्य हस्ते करवाल प्रति[वि]पक्षकुलकाल। शिरसि शोभते वरच्छत्र सम्पूर्णशशिवत् ॥ (C)

१८२। अथ दीपकमुदाहरति जसु हत्थ इति। विपक्ख कुलकाल—विपक्षकुलकाल करवाल खड्ग जसु हत्थ—यस्य हस्ते,

---

१८२। १ हत्थ (A) २ करवालु (F) ३ बिपक्ख (A), बिप्पक्खु (D), बिप्पक्ख (E), बिपक्ख (F) ४ सोह (A & B), सोह (C) ५ मित्त (B), वत्त (D & F) ६ ७२ (A), ८२ (F)

अथ सिंहावलोकच्छंदः। (D)

गण बिप्प[१] सगण धरि पत्रह पत्रं[२]
भण[३] सिंहअ[४]लोअण[५] छंद[६]बरं[७]।
गुणि गण[८] मण बुज्झहु[९] णाअ[१०] भणा[११]
णहि[१२] जगणु[१३] ण भगणु ण कस[१४]गणा[१५] ॥ १८३[१६]।

---

सोह—शोभते, यस्य सिर—[शिर]सि वर छत्त—वरच्छत्र, सपुस ससि मत्त—सपूर्णशशिवत, अथवा सपूर्णशशिमात्र पौर्णिमचद्र-मडलप्रमाणमित्यर्थ शोभते इति पूर्वेणैवान्वय ॥ (E)

१८२। यथा जसु इति ॥ यस्य हस्ते करवालो विपक्षकुलकाल। शिरसि वर छत्र पूर्णशशिवत् ॥ ८२ ॥ इति दीपकम ॥ (G)

१८३। अथ सिंहावलोक ॥ विप्रगण सगण कृत्वा पदे पदे भण सिंहावलोक छन्दोवर। गुणिगणा मनसा बुध्यध्व नागो भणति, यस्मिन्[न्न] य[ज]गण-भगणौ न कर्णगण ॥ पदे पदे प्र[ति]पाद, विप्रगण चतुष्कल, सगणमन्तेगुरु चतुष्कल, कृत्वा स्थापयित्वा, नाग पिङ्गल। तथाच विप्रगणसगणाभ्यामेव छन्दो-

---

१८३। १ बिप्प गण (F) २ मत्तकञ्च (D) ३ भणु (B, C & F) ४ सिंहव (A & D) ५ लोच (B), non est (C), लोवच (D), लोवह (F) ६ छन्द (C), सुब्दु (D) ७ धुञ्च (D), बुरस् (E) ८ जण (B), चण (C & E) ९ Dropt in (B) बुज्झाउ (C) १० कहञ्च (A) ११ चण (A) मणा (D), मूण (F) १२ Dropt in (A & B) णच (C) णहु (D), जसु ण (E) १३ जगण (B) १४ कण (E) १५ चणा (C) १६ ७४ (A), ८२ (F)

निर्व्वाह कार्य्य । एतदेव स्पष्टयितुमाह यस्मिन्निति, एतच्छन्दसि जगणभगणकर्णगणा न पतन्ति । जगणो मध्यगुरु, भगण आदिगुरु, कर्णो द्विगुरु, एतेषा निषेधाच्चतुष्कलेषु सगणविप्रगणाव[व]शिष्येते । (C)

१८३ । अथ सिंहावलोकनामक वृत्त लक्षयति गण विप्पेति । पअह पअ—पादे पादे गण विप्प सगण—विप्रगणसगणौ धरि—धृत्वा, छदवर—छद श्रेष्ठ सिहअ लोअह—सिंहावलोक भण, तसु—तस्मिन्, न जगण न भगण न कर्णगण । जगणो मध्यगुरुर्गण, भगणो गुर्वादिर्गण, कर्णो गुरुद्वयात्मको गण, एते तत्र न पततीत्यर्थ, इति णाअ भणा—नाग भणति । हे गुणि अण—गुणिजना यूयमिति [शेष] मण बुज्झह—मनसि बुध्यध्वम् ॥ अत्र विप्रसगणयो क्रमिकयो समुदितयोर्वा स्थापने न नियम, किंतु एताभ्यामेव व्यस्तसमस्ताभ्या पादे षोड़शकला पूरणीया, एताभ्यामतिरिक्तस्य गणो न देय । अतएवोदाहरणे प्रथमपादे ज[स]गणचतुष्टयेनैव षोड़शमात्रा पूरिता, द्वितीयचरणे च प्रथमविप्रद्वयमनतर सगणद्वयमित्युभाभ्यामेव षोड़शकला पूरिता, तृतीये च पुन सगणचतुष्टयेनैव पूरिता, * * * न त्वन्यो गणो दत्त, न त्वेतावेव क्रमिकसमुदिताविति द्रष्टव्यम् । (E)

१८३ । विप्पेति ॥ विप्रगण सगण धृत्वा पदे पदे, भण सिंहावलोकित[कन] छदोवर । गुणिगणा मनसि जानीत, नागभणित, नास्ति जगणो न भगणो न कर्णगण ॥ विप्रास्ततो मात्रास्सगणोऽपि, ताभ्या षोड़शमात्राः प्रतिपाद कार्या इति तात्पर्यम् ॥ ८३ ॥ (G)

विप्प सगण पत्र बेवि गण अंत[1] विसज्जहि[2] हार[3] ।
पच्छा हेरि कइत्त[4] करु[5] सोलह कल[6] पत्थार[7] ॥ १८४[8] ॥
दोहा ।

---

१८४ । विशेषान्तरमाह । विप्रगणसगणौ पदे द्वावपि, अन्ते विसर्ज्जय हार । पश्चाद्दृष्ट्वा कवित्व कुरु षोड़शक[ल]प्रस्तार ॥ द्वावपि द्वावेव, अत्र चान्ते विप्रगणो न देय इति । हार गुरुमन्ते यथा गुरु पतति तथा कार्य्यं, तेनान्ते सगणो देय इति पर्य्यवस्यति । (C)

१८४ । अथैनमेवार्थं विशदीकृत्य द्विपदिकयाह विप्प सगणेति । विप्प सगण पत्र बेवि गण — विप्रसगणौ पादे द्वावेव गणौ अंत — अंते पादांते हार — हार गुरु विसज्जहि — विसर्जय, पादांते सगणान्तपतित गुरु विसर्जय न लन्यमित्यर्थं, तथा-च पादांते सगण एव देय इति नियमो लभ्यते इति । हेरि — निरीक्ष्य विभाव्य, पच्छा — पश्चात् सोलह कल पत्थार — षोड़शकलप्रस्तार षोड़शकला प्रस्तार्य्यंते अस्मिन्नेतादृशमित्यर्थं कइत्त — कवित्व कुरु, एतल्लचण विभाव्य पश्चादेतच्छन्दसा कवित्व कुरु इत्यर्थं । (E)

१८४ । दोहया पुनर्द्रढयति, विप्प सेति ॥ विप्रसगणौ पदे

---

१८४ । १ अन्तह (B)   २ विसजउ (A), विजउ (B), विसज्जहिँ (D)
३ हाव (A)   ४ कवित्त (D)   ५ कर (C), करि (F)   ६ कव (F)
७ पच्छाव (A)   ८ ७५ (A), ८४ (F)

जहा, हणु उज्जर[1] गुज्जर[2] राअ[3] दलं[4],
दल[5] दलिअ[6] चलिअ[7] मरहट्ठ[8] बलं[9] ।
बल मोलिअ[10] मालब राअ[11] कुला,
कुल उज्जल[12] कल[13]चुलि[14] कस फुला[15] ॥१८५[16]॥
सिंहावलोक[17] । (A, B & C)

---

द्वावेव गणौ अन्ते विसर्जय हार। पश्चाद्दद्या कविल कुरु, षोड़शकल प्रस्तार ॥ अत्र सिंहावलोकने प्रतिचरण षोड़शमात्रास्तन्मध्ये मात्राद्वयमतिम गुरुरूप कार्यमित्यर्थ ॥ ८४ ॥ (G)

१८५। उदाहरति। हतमुज्ज्वल-गुर्ज्जल-राजकुल, दलमलितमहाराष्ट्रकुल, बलमोटितमालवराजकुल, कुलेनोज्ज्वलकरचूलीकर्णपुष्प ॥ कुल सैन्य, दलमलित मर्द्दित, मोटित प्रमर्द्दित येन, करचूलीवशावतसो जयति, करचूली क्षत्रियान्तरवाची, कर्णपुष्पम् अवतस ॥ (C)

१८५। अथ सिंहावलोकमुदाहरति हणु इति। हतोज्ज्वल-गुर्जरराजदल, दरदलित—चालित-महाराष्ट्रबल, बलमोटित-

---

१८५। १ उज्जर (D), उज्जल (F) २ Dropt in (A), र non est (C), गुज्जर (D), गुज्जल (F) ३ राउ (F) ४ कुल (B & C) कुला (F) ५ दर (A), बल (B) ६ मलिअ (C) ७ सखण (C) dropt in (F) ८ मरट्ठ (A), मरट्ट (B & C) ९ बला (F) १० मोडिअ (F) ११ लाउ (C) १२ सज्जल (A) १३ कष (A), कर (C & E) १४ चुरि (A & B) १५ फुरा (A & E) १६ ७६ (A), ८५ (F) १७ सिंहावलोकण (E)

## अथ प्लवंगमच्छंदः । (D)

जत्थ[१] पढम छत्र[२] मत्त पत्रप्पत्र[३] दिज्जए[४]
पंचमत्त चउमत्त गणा णहि[५] किज्जए[६] ।
संभलि[७] अंत लहू[८] गुरु[९] एक्कक[१०] चाहए[११]
मुद्धि पत्रंगम[१२] छंद[१३] वित्रक्खण सोहए ॥ १८६[१४] ॥

---

मालवराजकुल, एतादृश कुल उज्जल — उज्ज्वलकुल, करचुलि-[कर्ण] — करचुलिवंशोद्भव कर्ण फुरा — स्फुरति ॥ (E)

१८५ । यथा ॥ हणु इति । हतोज्ज्वलगुर्जरराजदलो दलदलित-महाराष्ट्रबल । बलचोटितमालवराजकुल, कुलोज्ज्वल कर-चुलिकर्ण स्फुरति ॥ करेति करचुलिवंशोत्पन्न कर्ण इत्यर्थ ॥ ८५ ॥ इति सिंहावलोकनम ॥ (G)

१८६ । यत्र प्रथम षण्मात्र पदे पदे दृश्यते, पञ्चमात्र-चतुर्मात्रगणौ न हि क्रियेते । सभणान्ते लघुर्गुरुरेक स्थाप्यता मुग्धे प्लवङ्गमच्छन्दो विलक्षण शोभते ॥ विलक्षण प्रकृष्ट, विचक्षण इति सम्बोधन वा । आदौ षट्कलो गण इत्युक्तम् । (C)

---

१८६ । १ जच्छ (A) २ च्छम (C) ३ पमपम (A) ४ दीसइ (D & F) ५ णहि (F) ६ दिज्जए (A) दिज्जिए (C & E) ७ सव्वलि (A), सभणि (B & C), सभलिम (F) ८ लड देइ (A) चि लड (B), लड (C & F) लह (E) ९ गुरू (F) १० वद (A) एक (F) ११ देहए (A) १२ पवगम (D E & F) १३ च्छन्द (C) १४ ७७ (A), ८६ (F)

पअ पअ[1] आइहि गुरुआ[2]
पिंगल पभणेइ[3] सअल[4] णिब्भंती[5]।
छंद पबंगम[6] दिट्ठो[7]
मत्ताणं एक[8] बीसंती[9] ॥ १८७[10] ॥ गाहा।

---

१८६। अथ प्लवगमना[म]क वृत्त लक्षयति जत्थेति। जत्थ —यत्र पढम—प्रथम पादादावित्यर्थ छअ मत्त—षण्मात्राक पअप्पअ—पादे पा[दे] दिज्जए—दीयते, ततश्च चउमत्त गणा —चतुर्मात्राका गणा दिज्जए—दीयते इति पूर्वेणैवान्वय, पचमत्त—पचमात्राकगण णहि किज्जए—न क्रियते। षट्कलानतर चतुर्मात्रकगणेनैव पादपूरण कर्त्तव्य न तु पचमात्रकगणेनेत्यर्थ। अते—पादात इत्यर्थ सभलि—सस्मृत्य एक्कक— एकैक लहू गुरु—लघुर्गुरु चाहए—अपेक्ष्यते पादाते लघुगुरु अवश्यक्रमेण स्थापनीयावित्यर्थ, हे मुद्धि—मुग्धे, तत् प्लवगमच्छदो विलक्षण शोभते॥ अत्र षट्कलोत्तर यथासभव पतितैश्चतुर्मात्राकै न तु पचमात्राकै पादाते अवश्यापेक्षणीयाभ्या च लघुगुरुभ्या प्रतिचरणमेकविशति कला पूरणीया इति सप्रदाय।

---

१८७। १ Dropt in (E) २ गुरुआ (C) ३ पभणइँ (B), भणेइ (D), भणइ (F) ४ सअण (C), सकल (D & F) ५ णिब्भती (B & C), णिब्भता (D), णिब्भति (E), णिभता (F) ६ पवगम (A & C) ७ दिट्ठो (B & C) ८ एक (B & C), एअ (D & F) ९ बीसति (A & E), बीसत्ता (D), बीसता (F) १० ७८ (A), ८७ (F)

तिक्कलु[1] चउकल पंचकल तिअ गण दूर करेहु ।
छक्कलु[2] तिणि[3] पलंत[4] जेहि लहु गुरु[5] अंत मुणेहु[6] ॥
१८७[7](क) ॥ दोहा ।*

---

तथाच प्रथममेक षट्कलस्ततश्चतुष्कलचय ततो लघ्वादिस्त्रिकल यत्र प्रतिचरण पतति, तत् प्लवग[म]नामक वृत्तमिति फलितार्थ । (E)

१८६ । जत्थेति ॥ यत्र प्रथम षण्मात्र पदे पदे दीयते, पचमात्रश्चतुर्मात्रो गणोऽपि क्रियते । अवष्टत्याते लघुर्गुरुरेको-ऽपेक्ष्यते, मुग्ध प्लवगम छन्दो विचक्षणमोह[शोभ]न ॥ अपि षट्कल ॥ ८६ ॥ (G)

१८७ । तत्र विशेषमाह । पदे पदे आदौ गुरुक पिङ्गल प्रभणति सकल निर्भ्रान्त । प्लवङ्गमच्छन्दसि दृष्टा मात्राणामेक-विंशति ॥ प्राथमिक षट्कल आदिगुरुरिति । (C)

१८७ । [The gloss (E) is wanting here —Ed ]

१८७ । पुन स्पष्टमाह ॥ पअ इति ॥ पदे पदे आदौ गुरु पिंगलो भणति सकल निर्भ्रान्ति । छद प्लवगम दृष्ट मात्राणा-मेकविंशत्या ॥ ८७ ॥ (G)

---

१८७ (क) । १ तिकल (A) २ छक्कल (A) ३ तिषि (A) ४ पलअत (A) ५ गुरआ (A) ६ मुणे (A) मुणेह (E) ७ ७८ (A) * N B This śloka is found in (A) and (E), but not in the others The Commentary of (E) is silent also —Ed

जहा, णच्चइ चंचल विज्जुलिआ[१] सहि जाणए
मम्मह[२] खग्ग[३] किणीसइ[४] जलहर साणए।
*फुल्ल[५]कअंबअ[६] अंबर[७] डंबर[८] दीसए[९]
*पाउस पाउ[१०] घणाघण[११] सुमुहि बरीसए॥
१८८[१२]॥ प्लवंगम[१३]।

---

१८८। उदाहरति। नृत्यति चञ्चला विद्युल्लता सखि ज्ञायते, मन्मथेन खड्ग कि निश्यते[?] जलधरशाणके। फुल्लकदम्बस्याम्बरे डम्बरो दृश्यते प्रावृष प्राप्य घनाघन सुमुखि वर्षति॥ निश्यते[?] निशाद[त] क्रियते। (C)

१८८। अथ प्लवगममुदाहरति, हे सहि—सखि, यत् चचल बिज्जुलिआ—चचला विद्युत णच्चइ—नृत्यति, एत[अतो] मम्मह—मन्मथ जलहर साणए—जलधरशाणके मेघस्वरूपशस्त्रोल्लेखने यन्त्रे इत्यर्थ खग्ग किणीसइ—ष[ख]ड्ग तीक्ष्णयति इति जाणए—ज्ञायते। फुल्ल कदंबअ—पुष्पिता कदम्बका, अबराडवर दृश्यते, घनाघन बरीसए—वर्षति, अत हे सुमुखि पाउस पाउ—प्रावृट् प्राप्ता न तु कात इति भाव॥ (E)

---

१८८। १ विज्जुलच्चा (B & C) विज्जुलिच्चे (E) २ दम्मह (A & F) कम्मह (D) ३ खग्गा (E) ४ किलीसइ (A) कणीसइ (F) * 3rd and 4th quadrants transposed in (E) ५ फुल्लु (A, D & E) ६ कदव (A), कलम्बअ (D), कदम्बअ (E), कलबअ (F) ७ & ८ अम्बअ डम्बअ (C) ९ दीसइ (E) १० समय (A) ११ घणघण (E) १२ १९ (A), ८८ (F) १३ पमगम (A), प्रवगम (B)

अथ लीलावतीच्छंदः। (D)

गुरु[1] लहु[2] णहि[3] णिम्म[4] णिम्म णहि
अक्खर पलइ पओहर बिसम समं
जहि[5] कहुँ णहि णिम्मह[6] तरल तुरअ[7] जिमि[8]
पसर[9] बिदिस[10] दिस[11] अगम गमं[12]।
गण पंच[13] चउक्कल[14] पलइ णिरंतर
अंत सगण धुअ[15] कंत[16] गणं[17]
परिचलइ[18] सुपरि[19] परि[20] लील[21] लिलावइ[22]
कल[23] बत्तीस बिसामकरं[24] ॥ १८९[25]।

---

१८८। यथा॥ णच्चेति॥ नृत्यति चचला विद्युत् सखि जानासि मन्मथस्य खड्गकणिशमिव, जलधर प्राण। पुष्पित कलव, अबरे आडवरो दृश्यते, प्रावृट् प्राप्ता, घनाघन सुमुखि वर्षति॥ ८८॥ इति प्लवगमम॥ (G)

---

१८९। १ & २ Transposed in (A) ३ & ४ Dropt in (A) ५ जक्ष (C) ६ णिम्म (A D, E & F) ७ तुरआ (A) तुरग (F) ८ जिम (B, C & E) ९ पसइ (B), पसरच्छ (C) १० दिस (A & B), दिसि (E) ११ दिसि (B & E) १२ चम (E) १३ मत्त (F) १४ मउक्कल (B), छक्कपञ्च (E), चउकल (F) १५ बुद्द (F) १६ कण (A & D) १७ गुण (F) १८ चउ चरण (C) १९ धरि (C) २० Non est (F) २१ णील (A, B & C) २२ णिलावइ (A, B & C), लीलावइ (F) २३ परि (A), पञ्च (B & C) २४ बिसामकरे (E), वीसामकर (F) २५ ८० (A), ८९ (F)

१८९ । अथ लीलावती । गुरुलघ्वोर्नहि नियम नियमो नहि अक्षरस्य पतति पयोधरो विषमसमयो, यत्र क्वापि नहि नियम तरलतुरगो यथा प्रसरति दिशि विदिशि अगम्ये गम्ये। गणा पञ्च चतुष्कला पतन्ति निरन्तरम अन्ते सगणो ध्रुव कान्तो गम्यते, चत्वारि चरणानि कृत्वा परिलील-लीलावती-पद द्वात्रिंशद्विराम-कर॥ कियन्तो गुरव कियन्तो लघव इति नियमो नास्ति, कियदक्षर पाद इति नियमो नास्ति, पयोधरो जगणो विषमे समे च, दृष्टान्तो यथा चपलोऽश्व दिग्विदिक्प्रसरणे यत्र क्वापि न नियममङ्गीकरोति तथैवेत्यर्थ । चतुष्कलगणा पञ्चविधा द्विगुर्व्वादयस्ते यथेच्छ पुन पुनर्निवेशनीया, न तु पञ्चसंख्यका-इत्यर्थ, द्वात्रिंशत्कले पादे चतुष्कलगणान्तलस्यावश्यकत्वात्, अयञ्च विशेष, सप्तगणा यथेच्छ चतुष्कला देया, अन्ते सगणो ध्रुवो नियत, कान्त कमनीय इति। केचित् कर्णगण पठित्वा सगण-कर्णगणयोरन्ते विकल्पमाहु । परिलीलेति परित सर्व्वतो लीला यस्य। परे तु चतुष्कलगणपञ्चकलानन्तर मात्राष्टकनियममित्याहु, साम्प्रदायिकास्त[स्व]नुमन्यन्ते पदस्य द्वात्रिंशन्मात्रासु विरामोऽवसान द्वात्रिंशन्मात्रक पदमित्यर्थ । (C)

१८९ । अथ लीलावतीनामक वृत्त लक्षयति गुरु लहु इति । जहि—यत्र गुरु लहु णहि णिम—गुरोर्लघोर्नास्ति नियम, एतावतो गुरव एतावतो लघवश्च यत्र पततीति नियमो नास्ती-त्यर्थ, अक्खर—अक्षरेऽपि णिम णहि—नियमो नास्ति, एता-वत्यक्षराणि पततीत्यपि यत्र न नियम इत्यर्थ, बिसम सम—

विषमे [समे] पयोधर जगण पलद्द—पतति इत्यपि कञ्ज णहि णिम्म—कुत्रापि चरणे नास्ति नियम, किन्तु गण पच चउक्कल—गणा पच चतुष्कला चतुष्कलभेदात्मका पचगणा इत्यर्थ, प्रस्तार-क्रियया चतुष्कलस्य पच भेदा ये भवति ते सर्वेऽपि व्यस्ता समस्ता विपर्यस्ता इति हृदय। ते कियत पतति इत्यत्र हेतु कल बत्तीसेति, तथा च द्वात्रिंशन्मात्रा पूरका अष्टौ चतुष्कलभेदा इति भाव, निरतरमितरगणातराव्यवहितमित्यर्थ पलद्द—पतति, अत—अते पादाते इत्यर्थ, कत गण कातगण सगण-इत्यर्थ, ध्रुव निश्चित पत[ती]ति पूर्वेणान्वय, यत्र छद जेम—यथा तरल तुरअ—तरलतुरग, तथा विदिशि दिशि अगम गम—अगम्ये गम्ये पसरइ—प्रसरति, सुपरि—पादे [?] परि-लोल—परित लीलया, परिचलइ—परिचलति, सा लीला-वती तत् लीलावतीनामक वृत्त, कल बत्तीस—कलासु द्वात्रि-शत्सु विसाम करे—विश्राम करोति इति योजना॥ यत्र सप्त-चतुष्कलानतर सगण प्रतिचरण पतति, सा लीलावतीति फलि-तार्थ। (E)

१८९। गुरु इति॥ गुरोर्लघोर्नास्ति नियमो नियमो नास्त्य-क्षरे पतति पयोधरो विषमसमयो, यत्र कोऽपि नास्ति नियम तरलतुरगो यथा प्रसरति विदिक्षु दिक्षु अगम्यगम्ययो। गणा' सप्त चतुष्कला पतति निरतरमते सगणो बुधकातगुण, परि-चलति सुपरिलीलया लीलावती कला द्वात्रिंशद्विश्रामकरा॥ पयोधरो जगण॥ ८९॥ (G)

जहा, घर[१] लग्गइ[२] अग्गि[३] जलइ[४] धह[५] धह
कइ[६] दिग मग[७] गह पह अणलभरे
सब दीस[८] पसरि[९] पाइक्क लुलइ[१०] धणि[११]
थणहर[१२] जहण[१३] दिआव[१४]करे ।
भअ[१५] लुक्किअ[१६] थक्किअ[१७] बइरि[१८]
तरुणि जण[१९] भइरब[२०] भेरिअ[२१] सह[२२] पले
महि लोट्टइ[२३] पिट्टइ रिउ सिर[२४]
टुट्टइ जक्खण[२५] बीर हमीर[२६] चले ॥
१९०[२७] ॥ लीलावती । (A, B, C & F)

---

१९० । उदाहरति । गृहे लगिला अग्निर्ज्वलति धगधगिति कृत्वा दिङ्मार्गनभःपथा अनलैर्भृता सर्व्वदिक्षु पदातिका प्रसृत्य लुठन्ति धन, स्तनभारजघने दत्त्वा कर । भयेन शुष्यति गुप्ता तिष्ठति

---

१९० । १ तव (E), सव (F) २ लग्गिअ (B) लइ (C), अरिघर (E), रिउघर (F) ३ लगि (E) ४ लगइ (F) ५ दह दिह (A) दह दह (B & C) ६ कहि (B) ७ दिगम (B), राहि पह दिगमग (D), णाहि पह दिमग (F) ८ दिस (A), देस (D & F) ९ पसरिअ (A) १० लुरइ (D & E) ११ धण (A, B & C) १२ पुणथण (A), थण (B) १३ जुव्वण (A), जघण (B, C & E) १४ दआव (A) देआव (B & C), दुहाव (F) १५ भए (B & C) १६ & १७ Transposed in (A, B & C) १७ चक्किअ (A), त्थक्किअ (B) १८ वहीर (B), वैरि (D E & F) १९ गण (D & F) जण (E) २० भरवह (D), भेरव (E), भैरव (F) २१ भेरीअ (A, B & C), रिअ (D) २२ सद्दु (C) २३ लुट्टइ (D & F) २४ दिह (F) २५ जखण (A), जख (B, C & E) २६ हम्मीर (B & C) २७ ८१ (A), ९० (F)

वैरितरुणी यदा भैरवो भेरवीवर[भेरीरव] पतति मह्या लुठति पीड्यते रिपुशिरस्त्रुट्यति यदा वीरहम्मीरश्चलति ॥ ग्टह-द्वत्यादौ शत्रूणामित्यर्थ । (C)

१९० । अथ लीलावतीमुदाहरति, सब अरि घरेति । जखण वीर हमीर चले—यस्मिन् चणे वीरहम्मीरश्चलित, तस्मिन् चणे इति शेष सर्व[ब] अरि घर—सर्वारिग्टहेषु अगि—अग्नि धह धहेत्यज[नु]करण [कइ—] कृत्वा जलइ—ज्वलति, दिग मग णह पह—दिङ्मार्गे नभ पथ अणलभरे—अनलभृत अग्निना परिपूर्ण इत्यर्थ जात इति शेष, धण थण हर जघण देश्राव करे—धनिस्तनभरजघनदत्तकर धनिनीनाम् अरिविदग्धाना स्तनभरे जघने च दत्त करो येन स तादृश इत्यर्थ पाइक—पदाति सब दीस पसरि—सर्वदिक्षु प्रसृत्य लुरइ—चलति, भेरव भेरिश्र सद्द पले—भैरवभेरीशब्द पतति, भश्र लुक्किश्र थक्किश्र—भयनिलीनस्थगित बेरि तरुणि अण—वैरितरुणी-जन महि लुट्टइ—मह्या विचेष्टते, पिट्टइ—ताड़यति खेद-यतीति भाव, रिउ सिर टुट्टिश्र—रिपुशिरांसि त्रुटति ॥ (E)

१९० । सबेति ॥ सर्वरिपुग्टहेषु अग्निर्लगति धगधगशब्द कृत्वा, नास्ति पथा दिग्मार्गेषु अनलो भृत, सर्व्वदेशे प्रसरति पदातय, लुठतीना रिपुग्टहिणीनां स्तनभरो जघन द्विधा करोति ॥ भयेन निलीन स्थगितो वैरितरुणीगणो भैरवे भेर्य्यां शब्दे पतिते मह्या लुटति पिट्टयति देह शिरस्त्रुटति यत् चणे वीरो हमीरश्चलित ॥ ९० ॥ इति लीलावती ॥ (G)

## अथ हरिगीताच्छंदः । (D)

गण चारि पंच कल[1] ठविज्जसु बीअ[2] ठामहि[3] छ[च्छ]क्कलो
पअ पअह[4] अंतहि[5] गुरु करिज्जसु वसणेण[6] सुसब्बलो[7]।
दह[8] चारि[9] दुक्कइ[10] दह दु माणहु[11] मत्त ठाइस[12] पाअओ[13]
हरिगीअ छंद पसिद्ध जाणहु[14] पिंगलेण पआसिओ[15] ॥
१९१[16] ॥

१९१ । अथ हरिगीताच्छन्द । गणाश्चत्वार पञ्चकला स्थाप्यन्ता द्वितीये स्थाने षट्कल, पदे पदे अन्ते गुरु क्रियता वर्णनेन सुशबल । दश स्थापयित्वा तत्कृतिर्दश द्वौ मानय मात्रा-अष्टाविंशतिर्मानय पिङ्गलेन व्याख्यातम् ॥ अयमर्थ — चत्वार पञ्चकला कर्त्तव्या, तत्र प्रथमगणानन्तर षट्कल, तदनन्तर त्रय पञ्चकलास्ततश्चैको गुरुरेव क्रमेण प्रतिपादमष्टाविंशतिर्मात्रा भवन्ति, वर्णनेन समीचीनवर्णनेन सुशबल मिश्रित, [यद्वा] वर्षनेन महाप्राणाक्षरेण सुसबल बलवदित्यर्थ, दशाङ्क स्थापनीय दशाङ्केन च पूरणीयमिति तत्कृतिशब्दार्थ, तेन तस्य गुणन

१९१ । १ कल (A, C & E), कलु (B), कल (D) २ विअ (E) ३ ठामइ (B & C) ४ ह non est (B & C) ५ अतह (A), अन्तोह (D) ६ Dropt in (E) ७ सुसहलो (A), असव्वलो (F) ८ देह (C) ९ ठाइहि (C) १० तक्कइ (A), करइ (B & C), दुइ (E) ११ दुमाणह (B & C), उमाणऊ (D), दुइ पमाणऊ (E) १२ अट्ठाईस (A, B, C & E) १३ पाओ (A), पओ (B), पअओ (C), ओ (E) १४ माणऊ (A, B & C), जाणह (D) १५ वआसिओ (A, B & C), पआसि (E) १६ ८२ (A), ९१ (F)

कृतिरिति ज्योतिशास्त्र। इत्यच्च शताङ्के निष्पन्ने दश द्वावित्य-
नेन द्वादशाधिक शतमात्र छन्द इत्यर्थ। इदमेव कृतमि[द]त्यु-
क्तम, अट्ठाइसेति, पादस्याष्टादश[विंशति]मात्रत्वादिद सिद्धमित्यर्थ।
षट्-दश[?]दश द्वादश-द्वावि[?]त्येषा योजनेऽष्टाविंशतिसख्या-
भवन्ति। (C)

१९१। अथ हरिगीतनामक वृत्त लक्षयति, गण चारि[री]ति।
पञ्च पञ्चहि[ह]—पादे पादे प्रतिचरणमित्यर्थ प्रथम गण
चारि—गणाश्चतुर पचकलान् ठविज्जसु—स्थापयत, बीअ
ठामहि—द्वितीये स्थाने प्रथमपचकलगणानतरमिति यावत
छक्कलो—षट्कलान् स्थापयतेति पूर्वेणान्वय, तथाच कर्त्तव्येषु चतु-
पचकलेषु प्रथमपचकलानतरमेक षट्कल सस्थाप्य अनतरमुर्व-
रितास्त्रय पचकला गणा कार्या इति पर्यवसितोऽर्थ। अतहि—
अते पादाते इत्यर्थ गुरु करिज्जसु—गुरुमेक कुरुत, दह चारि
दुइ दह दुइ—दश चतस्र द्वे दश द्वे एव मत्त अट्ठाईसओ—
मात्रा अष्टाविंशति पमाणहु—प्रमाणयत पिगलेण पआसिओ
—पिगलेन प्रकाशित, बण्णेण सुसब्बलो—वर्णनेन सुसवल
सुतरा सबल समीचीनमित्यर्थ पसिद्ध—प्रसिद्ध हरिगीअ
छद—हरिगीत छद जाणहु—जानीत॥ प्रथममेक पचकल-
स्तत एक षट्कलस्ततस्त्रय पचकलास्तत एको गुरु यत्र
पतति, तदष्टाविंशतिमात्राकचरण हरिगीतनामक वृत्तमिति
फलितार्थ। (E)

१९१। गणेति॥ गणाश्चत्वार पचकला स्थाप्यता द्वितीये

बीए[1] छक्कलु[2] ठावि[3] कहु[4] चारि पंचकल[5] देहु।
बारह उत्तर मत्त[6] सउ माणसु[7] अंत ठवेहु॥ १९२[8]॥
दोहा।

---

स्थाने षट्कल पदे पदे अंते गुरु क्रियता वर्णनेन च सबल। पुन प्रकारेणैतदाह॥ दहेति॥ दश १० चत्वारि ४ द्वि २ कल दश १० द्वौ २ मानय मात्रा अष्टाविंशति पादे॥ हरिगीत छंद प्रसिद्ध जानीत पिंगलेन प्रकाशितम्॥ ९१॥ (G)

१९२। इदमेव स्पष्टयति। द्वितीये षट्कल स्थापयित्वा चतुर पञ्चकलान् देहि। द्वादशोत्तरमात्राशतक मानसमन्ते कुरु॥ शतकमित्य[न]न्तर छन्दो भवतीति पूरणीय, मानसशब्दो गुरुवाची। (C)

१९२। अथैनमेवार्थं दोहावृत्तेनाह, बीए छक्कलु इति। अत्र हरिगीतच्छन्दसीत्यध्याहरणीय, चारि पचकल—चतुर पचकलान् देऊ—दत्त। बीए—द्वितीये स्थाने प्रथमपचकलानतरमित्यर्थ छक्कलु एक कऊ—षट्कलमेक कथयत, अंते—पादांते माणस—मानसमेक गुरुमित्यर्थ ठवेऊ—स्थापयत, बारह उत्तर—द्वादशोत्तरा मत्त सउ—मात्रा शत चतुश्चरणसमुदिता जानीतेति शेष॥ (E)

---

१९२। १ बिश ठाइ (F) २ छक्कल (A) ३ एक्क (E), एक (F) ४ कालु (C) ५ पचक्कलु (B), पचकलु (F) ६ Dropt in (C) ७ माणस (E) ८ ८३ (A), ९२ (F)

जहा, गत्र गत्रहि ढुक्किश्र तरणि[1]

लुक्किश्र तुरश्र तुरश्रहि[2] जुज्झिश्रा[3]

रह रहहि मीलिश्र[4] धरणि पीलिश्र

श्रप्पपर[5] णहि बुज्झिश्रा[6] ।

बल मिलिश्र[7] श्राइश्र[8] पत्ति जाइउ[9]

कंप[1] गिरिबर[11] सीहरा[12]

उच्छलइ[13] साश्रर दीण[14] काश्रर

बइर[15] बढ्ढिश्र[16] दीहरा[17] ॥ १९३[18] ॥

हरिगीता[19] । (A, B & F)

---

१९२ । द्वितीये स्थाने षट्कलमेक कथय, चतुर पचकलान् देहि । द्वादशोत्तर मात्राणा शत मानसमते स्थापय ॥ मानस गुरु ॥ ९२ ॥ (G)

१९३ । उदाहरति । गजा गजैर्ढौकितास्तरणिर्लुप्त, तुरगा-

---

१९३ । १ तरुणि (B), dropt in (C) २ तुरहि (B) ३ जुज्झिआ (B & C), जुज्झि (D & F) ४ भीलिअ (B & F), dropt in (C) ५ णिअ आपर (A & C), णेअ पर (B) ६ बुझझि (A & D) ७ मिलइ (A), भिअ (B & C), भिलिअ (F) ८ पत्ति उ (B & C), आएउ (D E & F) (here ए short) ९ जाइअ (A), धाएउ (D & E), धावउ (F) १ कम्पि (B & C) ११ Non est (B) गिरवर (D) १२ सिहरा (F) १३ उउत्छलइ (A), उच्छलइ (B), उच्चरइ (D), उच्छलिअ (E) १४ दिस (D & F) १५ वइिर (C), वैर (D & E) वैरि (F) १६ वड्डिअ (B) वड्ढिअ (C), वडिअ (F) १७ दीहरी (E) १८ ८४ (A), ९२ (F) १९ हरिगीआ (C)

त्वरायुक्ते रथै पीडिता धरणी पतिता., निजा परे नहि बुद्धा। बलेन भीता आगता पत्तयो धाविता कम्पते गिरिवरशिखरम, उच्छलित सागर दीना कातरा वैर वर्द्धित दीर्घम्॥ ढौकिता सन्नद्धास्तरणिर्लुप्त समरभूमिसमुत्थितधूलिभिरित्यर्थ, वैर वैरिणा कर्म्म युद्धमित्यर्थ। वैरीति पाठे वैरिणो वर्द्धिता इत्यर्थ। तथा च दीर्घं चिरकाल भोजनादिना वर्द्धिता ये वैरिणस्तेऽपि दीना कातरा वा इति लभ्यते। (C)

१९२। अथ हरिगीतमुदाहरति गअ गअहीति। गजा गजै सह ढुक्किअ—ढौकिता युद्धार्थं मिलिता इत्यर्थ, तुरअ तुरअहि—तुरगास्तुरगै सह जुझ्झिआ—अयुध्यन्[न्त], रह रहहि—रथा रथै सह मीलिअ—सयुक्ता युद्धाय मिलिता इत्यर्थ, धरणि पीलिअ—धरणि पीडिता, तरणि—तरणि सूर्य लुक्किअ—आच्छन्न हयगजपादोद्धूतधूलिभिरिति भाव, अतएव अप्प पर—आत्मीया एते परकीया इति न वि[वे]कआसीदित्यर्थ, बल—बलानि सैन्यानि मिलिअ—एकीभूय आएउ—आगतानि, पत्ति—पत्तव[य] धाएउ—धाविता, गिरिबर सीहरो—गिरिवरशिखराणि कप—कम्पितानि, साअर—सागरा उच्छलिअ—उच्छलिता, काअर—कातरा रणभीरवो वा इत्यर्थ दीण—दीना जाता इति शेष, दैन्यमाश्रिता इत्यर्थ, दीहरा—दीर्घं वैर बड्डिअ—वैर वर्द्धित, कर्णे युध्यमाने सती[ति] शेष॥ (E)

१९२। यथा॥ गअ इति॥ कश्चिद्युद्ध वर्णयति। गजा गजै-

अथ त्रिभंगीच्छंद । (D)

पढमं दह रहणं[1] अट्ठवि[2] रहणं
पुणु बसु[3]रहणं रसरहणं
अंते गुरु सोहइ महिअल[4] मोहइ
सिद्धि[5]सरो[6] हइ बरतरुणं ।
जइ पलइ[7] पओहर[8] किमइ[9] मणोहर[10]
हणइ[11] कलेबर[12] तासु कई
तिभंगी[13]छंदं सुक्खा[14]णंदं
भणइ[15] फणिंदो[16] बिमलमई ॥ १९४[17] ॥

---

मिलितास्तरणिराच्छादितस्तुरगास्तुरगैर्युद्ध्यते, रथा रथैर्मिलिता धरणि पीडिता आत्मीय परो न बुध्यते। बलान्येकीभूया-गतानि पत्तयो धावति कपते गिरिवरशिखराणि, उच्छलति सागरो दीना कातरा वैरिणो वृद्धा दिवसा ॥ इति हरिगीत छद ॥ (G)

---

१९४। १ रण (B) २ अट्ठह (A &E), अट्ठहि (B), dropt in (C), र too many in (D) ३ Dropt in (B), रहु हरण (D) ४ तिहुअण (D), तिहुवण (F) ५ सिद्ध (D E & F) ६ सरा (E & F) ७ लइ (B) ८ पओहव (B & C) ९ किमह (A) १० मणोहव (B & C), णोहर (E) ११ हरइ (D), करइ (F) १२ कलेवव (B & C) १३ तिभङ्गी (B & C), तिभगी (F) १४ जणिआ (D), जणआ (F) १५ भण (B) १६ भणीन्द (B) १७ ८५ (A), ९४ (F)

१९४। अथ त्रिभङ्गी। प्रथम दशसु रहण, अष्टस्वपि रहण, पुनर्व्वसुरहण रसेषु रहणम् अन्ते गुरु शोभते, महि[ही]तल मोहयति सिद्धे सरो भवति बरतर[रु]ण। यदि पतति पयोधर किमिद मनोहर हन्ति कलेवर तस्य कवे त्रिभङ्गीच्छन्द सुखानन्द भणति फणीन्द्रो विमलमति॥ दशसु मात्रासु रहण विश्राम, एवमग्रेऽपि, इत्यश्च द्वात्रिंशन्मात्र पादो भवति। अन्तिमो गुरुरपि तदन्त पाती, सिद्धेर्द्धनादिसिद्धेरिव[र]तरुण सरो भवति छन्दसो विशेषणम्। अत्र जगणो न देय इति। सुखेन दुःखासम्भेदेनानन्दयति इति सुखानन्दम। अत्र सर्व्वेऽपि चतुष्कला कार्य्या इति सम्प्रदाय। (C)

१९४। अथ त्रिभगीनामक वृत्त लक्षयति पढममिति। पढम—प्रथममादौ दह—दशसु मात्रास्विति शेष, अग्रेऽपि यथायोग्य योजनीय, रहण—विश्राम, तत अट्ठह—अष्टसु मात्रास्वित्यर्थ विश्राम, तत रसरहण—रसेषु षट्सु तथाच रससङ्ख्योपलक्षितासु षट्सु मात्रासु इत्यर्थ रहण—विश्राम, एव द्वात्रिंशन्मात्रा प्रतिचरण पतती[ति] शेष, अन्ते—पदान्ते गुरु सोहइ—शोभते, कर्त्तव्यासु द्वात्रिंशन्मात्रासु अन्तिममात्राद्वयमेकगुरुस्वरूप कार्यमित्यर्थ, तत् तिभ्भगीछद—त्रिभगीच्छद तिअवण मोहइ—त्रिभुवन मोहयति, महि अल इति पाठे महीतलमित्यर्थ, अस्मै सिद्ध बरतरुण—तरुणवर लोकस्येत्यर्थ सराहइ—श्लाघते। अत्र यदि पओहरु—पयोधर मध्यगुरुर्जगण इत्यर्थ पलइ—पतति, तदा किमइ मणोहरु—किमपि मनो-

जहा, सिर किज्जिअ[1] गंगं गोरि अधंगं
हणिअ अणंगं पुर दहणं[2]
किअ फणिवइ[3] हारं तिहुअण[4] सारं
बंदिअ छारं रिउ महणं[5]।
सुरसेबिअ चरणं मुणिगण[6] सरणं
भवभअ[7] हरणं सूलधरं[8]
साणंदिअ[9] बअणं सुंदर णअणं[10]
गिरिबर सअणं[11] णमह हरं॥
१९५[12]॥ त्रिभंगी। (A, B C & F)

---

हर न भवतीति शेष, किंतु येन तच्छंदसा कवित्व क्रियते तासु कई—तस्य कवे कलेवर शरीर हणइ—हंति, इति विमलमई—विमलमति, जणिआणंद—जनितानंद, क्वचित्सुक्खाणंद इति पाठ सुखी आनंदीत्यर्थ, फणिंदो—फणींद्र पिंगल भणइ—भणति। अत्र चतुर्मात्रिका अष्टौ गणा प्रतिचरण देया, तेष्वेवातिमो गणो गुर्वंत कर्त्तव्य, पूर्वोक्तमात्रासु विश्राम कर्त्तव्य इति फलितार्थ। (E)

---

१९५। १ किज्जइ (C), किज्जिअ (D) २ हरण (B) ३ दनिवनि (B) कणिवइ (D) ४ तिहुअण (E) ५ दहण (B & C) ६ मुणिअण (D & F) ७ भअ भअ (A) ८ सूलहर (B & C), सलधर (E) ९ आणंदिअ (F) १ णअ (B) ११ सरण (A & B), dropt in (C) १२ ८९ (A), ९५ (F)

१९४। दुर्मिलामाह [त्रिभङ्गीमाह] ॥ पढम इति ॥ प्रथम दशविरतिरष्टस्वपि विरति पुनर्वसुविरति, अते गुरु शोभते, त्रिभुवन मोहयति सिद्धा श्लाघयति वरतरुणम्। यदि पतति पयोधर किमपि मनोहरो हरति कलेवर तस्य—[तस्य] कवे, त्रिभङ्गीच्छदो जनितानद भणति फणींद्रो विमलमति ॥ वसवोऽष्टौ, रसा षट्, यद्दीति जगण कविनाशक, तस्मान्न कार्य-इति भाव ॥ ९४ ॥ (G)

१९५। उदाहरति। शिर कृत[गग] गौर्य्यर्द्धाङ्ग हतानङ्ग पुरदहन कृतफणिपतिहार त्रिभुवनसार वन्दितभस्मान रिपु-दहन। सुरसेवितचरण मुनिगणशरण भवभयहरण शूलधर सान-न्दितवदन सुन्दरनयन गिरिवरशयन नमत हरम् ॥ वदित कार तिलकीकृतभस्मानमित्यर्थ । (C)

१९५। अथ त्रिभङ्गीमुदाहरति सिर किज्जिअ इति। शिर-कृतगग गौर्यर्द्धाग हतानग त्रि[?]पुर[द]हन कृतफणिपतिहार त्रिभु-वनसार वदितभस्मान रिपुप्र[?]मथन। सुरसेवितचरण मुनिगणशरण भवभयहर त्रिशु[शू]लधर, सानदितवदन सुदरनयन गिरिवर-शयन नमत हरम् ॥ (E)

१९५। यथा ॥ सिरेति। शिर कृतगगं गौर्यर्द्धाग हतानग पुरदहन कृतफणिपतिहार त्रिभुवनसारं वदितभस्मान रिपु-मथन। सुरसेवितचरण मुनिजनशरण भवभयहरण शूलधरम्, आनदितवदन सुंदरनयन गिरिवरशयन नमत हरम् ॥ ९५ ॥ इति त्रिभङ्गी ॥ (G)

अथ दुम्मिलाच्छंदः । (D)

तीस दुइ[1] मत्ते[2] एरिस[3] जुत्ते[4]
बुहअण राअ[5] भणंति[6] णरा
विसम त्तिअ[7] ठामहि[8] एरिस[9] भाअहि[10]
पअ पअ दीसइ[11] कण्ण धरा[12] ।
ता[13] दह[14] पढमं वे[15] अट्ठ ट्ठाअं[16]
तीअ[17] चउद्दह[17] किअ[18] णिलओ
जो एरिसि[19] छंदे तिहुअण वंदे
सो जण[20] बुज्झउ[21] दुम्मिलओ ॥ १९६[22] ॥

१९६ । द्वात्रिंशन्मात्राभिरेतादृशीभिर्युक्ता बुधजनराज चरन्ति नरा, विश्रामस्त्रिषु स्थानेषु एतादृशभाग पदे पदे दृश्यते कर्ण-गणः । तत् दशसु रहण प्रथममेव, अष्टसु द्वितीय एव, चतुर्दशसु

१९६ । १ दु (A, D & E) २ मत्तह (D), मत्तहि (F) ३ एरिसि (A, C & F), एरसि (B), परिस (D & E) ४ जुत्तह (D), जुत्तहि (F) ५ राअ (A, B & C) ६ चवति (A), बदन्ति (B), चरन्ति (C), भणइ (F) ७ विसम तिअ (E & F) ८ ठावहि (A), ठाइ (B & C), ठाएहि (D), ठाअहि (E) ९ एरिसि (B & C), दिसि (F) १० भावहिँ (A), भाअइ (B & C), भाएहिँ (D) भाए (F) ११ दीसहिँ (D) १२ धरा (A D & F) १३ जा (E) १४ दहवइ (C) १५ वे (A & B), च (C) १६ अट्ठ दीअ वे (A), dropt ın (B), अट्ठ दीअ (C), अठ ठाअ तहँ (D & F) १७ Trans posed ın (B & C), चौदह तीअहिँ (D), चौदह तीअ (E), dropt ın (F) १८ किण (A & C) १९ एरिस (A & E) २० जग (A), जइ (B & C) २१ बुजभाइ (A, B & C), बुजभाउ (D) २२ ८० (A), ९६ (F)

तृतीये कृतनिलय, यत्र एतादृशश्छन्दस्त्रिभुवनवन्द्य [न्द्यं] स तत्] यदि बुध्यते दुर्म्मिलक॥ एतादृशीभिस्त्रिभङ्गुकलचणयुक्ताभिस्तेन जगणव्युदास। बुधजनराजेति सम्बोधन। चरन्ति वदन्ति, एतादृशभागैर्व्वक्ष्यमाणभागे, कर्ण एव गृह स्थान यस्य, तेन कुण्डल लभ्यते, तेन गुरुरायाति, तेन चान्ते गुरुरिति फलितार्थ। गुरुगणान्तर्गत इति बोध्य, विश्रामस्थान दर्शयति तदिति, दशसु मात्रासु, एवमग्रेऽपि कृतविश्राम। (C)

१९६। अथ दुर्मिला लचयति, तीस दुइ मत्त इति। हे नरा एतत् तीस दुइ मत्ते—द्वात्रिंशन्मात्राभि परिसजुत्ते—परिसयुक्ते यत्र च एरिस भाअहि—एतादृशभागे एतादृशे अनुपदमे[व] वक्ष्यमाणे भागे कलाग्रैरित्यर्थ, तिअ ठामहि—त्रिषु स्थानेषु बिसम—विश्राम दीसइ—दृश्यते, यत्र च पअ पअ—पादे पादे कस घरा—कर्णगृह कर्णो द्विगुरुको गणस्तस्य गृह स्थापनमित्यर्थ, दृश्यते इति पूर्व्वेणैवान्वय। कुत्र स्थानत्रये विश्रामो दृश्यते इत्यत आह पढममिति। यत्र च पढम—प्रथम दह—दशसु मात्रास्वित्यर्थ णिलअो—निलय विश्राम इति यावत् किअ—[कृ]त इद चाग्रेऽपि योज्य, बे—द्वितीय अट्ठ ठाअ—अष्टमस्थाने अष्टसु मात्रास्वित्यर्थ निलय कृत इति पूर्वानुषग, तीअ—तृतीय चउदह—चतुर्दशसु मात्रास्वित्यर्थ निलय कृत, जो एरिस छदे—यत एतादृश छदस्त्रिभुवनवद्य तत् न जना जा[नी]त दुर्म्मिलकम् इति बुधजनराज पिगल भणति—भणति॥ (B)

दह[1] बसु चउदह[2] बिरइ करु बिसम कसगण देहु[3]।
अंतर बिप्प पइक्क गण[4] दुम्मिल छंद कहेहु[5]॥ १९७[6]॥
दोहा।*

---

१९६। [दुर्मिलामाह] तीसेति॥ त्रिंशद्भिर्द्वाभ्यां परिसंयुक्ता बुधजनराजो भणति नरा, विश्रामस्त्रिषु स्थानेषु एतादृश भाति पदे पदे दृश्यते कर्णधर। तत् दशसु प्रथमो द्वितीयोऽष्टमे स्थाने तथा तृतीय कृतनिलये, यदेतादृश कृदस्त्रिभुवनवंदित तज्जनो बुध्यतु[ता] दुर्मिला॥ द्वात्रिंशन्मात्रा[भि]रित्यर्थ, कर्णधरो द्विगुरु, निलयेऽवसाने॥ ९६॥ (G)

१९७। अथैनमेवार्थं दोहावृत्तेन स्पष्टयति दहेति। दशसु बसु—अष्टसु चतुर्दशसु मात्रास्विति शेष बिरइ करु—विरति कुरु बिसम—विषमे स्थाने कसगण देऊ—कर्णगण देहि। पद-मध्ये विषमे स्थाने यथाशक्य द्विगुरुक गण देहीत्यर्थ। अंतर—मध्ये बिप्प पइक्क—विप्र चतुर्लघुक गण पदाति सामान्यचतुष्कल भण दुर्मिलाच्छंद कथय॥ अत्र प्रतिचरण विषमस्थाने यथाशक्य प्राचुर्येण कर्णो देय समे चेत्तत्पतति तदा न बाधकमिति द्रष्टव्यम्। (E)

---

१९७। १ तह (F) २ चौदह (F) ३ देहा (D), देह (F) ४ मल (A) भण (D & E) ५ सुणेऊ (A) कहेह (D & F) ६ ८८ (A), ९७ (F)
* This is not found in (B & C)—Ed

अथ हीरः। (D)

णाउ[1] पमण तिस्सि[2] छगण अंत करहि[3] जोहलं
हार[4] ठविअ जंपु[5] सुपिअ[6] बिप्प गणहि सव्वलं।
तिस्सि[7] धरहि[8] वेबि करहि[9] मत्त पअहि[10] लेक्खए
कोइ[11] जणइ[12] दप्प[13] भणइ हीर सुकइ[14] पेक्खए[15] ॥
१९९[16] ॥

---

पीड्यमानास्खलन्ति भग्नचीना दर्पहीना लौहवलेन[?] हाक्रन्द। ओड्रान् ओज्झरिला कीर्त्ति प्राप्ता मोटितो मालवराज तेलङ्गा भग्ना पुनर्न लग्ना काशीश्वरराजो यदा चलति ॥ कृतधाटिका कृतश्रेणीका ये नेपालास्ते जिता इत्यर्थं। (C)

१९८। अथ दुर्मिलामुदाहरति जे किज्जिअ इति। येन कृता धाटी पाविअ कित्ती—प्राप्ता कीर्त्ति स काशीश्वरराज जखण—यस्मिन् चणे, जित नेपाल भोटाता खदेह ताडयन्त-स्खलिता, दर्पहीना चीना भग्नीकृता लोहावलेहास्त्रक्रन्दु पतित। ओड्डावित अतरिच प्रापित ओड्र, मोटित मालवराजकुल, तैलगा पलायिता परावृत्य नागता ॥ (E)

---

१९९। १ णाश्र (F) २ तिणि (A) ३ करि (A) ४ हाव (A) ५ जासु (A), जप्पु (B), जम्प (C), पुणवि (D), पुष्पवि (F) ६ सुविश्र (C) ७ तिणु (B) ८ धरणि (A), धरह (B & C) ९ करह (B & C) १० पअह (B & C), अत रगण (D & F) ११ कोण (A), कमण (D & E) १२ जणउ (E) ११ & १२ after सप्प भणइ (C) १३ सप्प (A, B & C) १४ सुकवि (F) १५ पेक्खण (A), देक्खए (B & C), लेक्खए (E) १६ ९० (A), १०० (F)

१९८। यथा॥ जईति॥ यत् कृतधारा जिता नृपाला भोटाता पीड्यत[द्यमाना]स्वालिता, भग्नाश्चीना दर्पेण हीना लोहावले हाकन्द पतित। उत्कलदेश उड्डायित कीर्त्ति प्राप्ता मालवराजबले, तैलिंगा भग्ना बङ्गलग्नकाली कार्णीश्वरराजो यत्सुमे चलित ॥ ९८ ॥ इति दुर्मिला ॥ (G)

१९९। अथ हीरकच्छन्द। नाग प्रभणति चीन् छगणान् अन्ते कुरु जोहल हार धृत्वा जल्प सुप्रिय विप्रगणेन प्रबल। त्रय धृत्वा द्वय कुरु मात्रा पदे लिख्यन्ता, सर्पो भणति को जानाति हीर सुकविर्दृश्यते॥ छगण षट्कलगण, जोहलो मध्यलघु पञ्चकल। षट्कले विशेषमाह हारेत्यादिना, हारो गुरु, सुप्रियो द्विलघु, विप्रगणश्चतुर्लघु आवश्यक, हारसुप्रिययोर्वैकल्पिकमुपादान, तथा चादिगुरु सर्व्वलघुर्वा षट्कल इति पर्य्यवसान, तदिदमुक्त त्रयमित्यादिना। अयमर्थ — हारसुप्रियविप्राणामेवात्र प्रवेश, तत्र च हारविप्र-सुप्रियविप्रयोर्यथेच्छमुपादान, यद्वा त्रय द्वयमित्यत्तरस्य वामगतिक्रमेण त्रयोविंशत्यङ्क आयात, तथा च त्रयोविंशतिमात्रा पदे क्रियन्तामित्यर्थ। कीदृशो जनो गर्व्वेण वदति अभिभाष्यैव वदति, स दृश्यते तादृशो दुर्म्मिलक[?] इत्यर्थ ॥ (C)

१९९। अथ हीरनामकवृत्त लक्षयति, णाउ पभणेति। हे सुप्रिय शिष्य आदौ तिण्णि छगण — त्रीन् छगणान् षट्कल-गणानित्यर्थ जपु — जल्प कथयेत्यर्थ, अते — षट्कलत्रयाते जोहल — योद्धार गणमिति यावत् करहि — कुरुष्व, तिण्णि धरहि

**हार सुपिश्र भण[1] बिप्पगण तीए[2] भिस्स[3] सरीर ।**
**जोहल अंते सठबहु तेइस मत्तश्र[4] हीर[5] ॥ २००[6] ॥ दोहा।**

---

वेवि करहि—त्रीन् स्थापय द्वौ कुरुष्व, एव पश्रहि—पादेषु मत्त—मात्रा लेक्खए—लेखय, श्रकाना वामतो गत्या त्रीन् द्वौ मिलिला त्रयोविंशतिर्मात्रा प्रतिचरण स्थापयेत्यर्थ । एत[?]-हार ठविश्र विप्प ग[ण]हि सव्वल—हार गुरु सस्थाप्य विप्रगणै-श्चतुर्लघुकगणै सबल प्रचुर हीर—हीर पेक्खए—प्रेचख, एव तत् सुकवि दर्पण [भण]ति, एतत् कमण जणइ—क जानाति न कोऽपीत्यर्थ, इति नाग प्रभणति ॥ श्रत्र त्रीन् षट्कलान् देही-त्युक्त्या षट्कलस्य त्रयोदशापि भेदा प्राप्ता, तत्र द्वादशतम-[Vide p 22—Ed] एव भेदो वारत्रय देशो[यो] नान्य इति ज्ञापयितु हार सस्थाप्य, विप्रगणै सबलमिति छन्दोविशेषणमिति द्रष्टव्यम । उक्तविधषट्कलानतर च यत्र रगण प्रतिचरण पतति तत् हीरनामक वृत्तमिति फलितार्थ । (E)

१९९ । णाश्र इति ॥ नागो भणति त्रीन् षट्कलानते कुरु जोहल, जोहलो रगण । षट्कलकरणे प्रकारमाह, हारेति ॥ हार स्थाप्य पुनरपि भो सुप्रिय विप्रगणेन शबल । द्वौ त्रीन् धारय कुरु, श्रते रगणो लेख्यते, कोऽपि जानाति दर्पण भणति

---

२० । १ गण (A, B & C) २ तिस विध (E), तीहे (F) ३ भिण (A) मित्त (E) ४ मत्तह (D) ५ हीव (B & C), हिर (E), dropt in (F) ६ ९१ (A), १ (F)

जहा, धिक्क दलण[1] थोंग[2] दलण[3] तक्क[4] दलण[5] रिंगए[6]
णं ण णु कट[7] दिंग दुकट[8] रंग चल तुरंगए[9] ।
धूलि धवल हक्क सबल[10] पक्खि[11] पबल पत्तिए[12]
कम्म चलइ कुम्म ललइ भुम्मि[13] भरइ कित्तिए[14] ॥
२०१[15] ॥ हीर । (A, B & C)

हीरक सुकवि प्रेचते ॥ हारो गुरुर्विप्रश्चतुर्लघुस्तेन शबलो मिश्र, तेन गुरु-लघुचतुष्टयरूप षट्कल कार्य इत्यर्थ ॥ अकाना वामतो गत्या त्रयोविंशतिर्मात्रा इत्यर्थ ॥ (G)

२०० । तदेव स्पष्टयति ॥ हार सुप्रियो विप्रगणस्त्रिर्भिन्न । जोहलमन्ते संस्थापय, त्रयोविंशतिमात्रक हीरम् ॥ (C)

२०० । अथैनमेवार्थं दोहावृत्तेन प्रकटयति हारेति । हे सुप्रिय शिष्य पूर्व हार गुरु तत विप्पगण—विप्रगण चतुर्लघुक गण भण कथय, एव तिस्र विध—वारत्रयविधानेनेत्यर्थ भिण्ण सरीर—भिन्नशरीर भिन्नम् अन्यच्छदोभ्यो विलक्षण शरीर यस्य तदित्यर्थ । अते पादाते जोहल—रगण सठवऊ—स्थापय, एव तेइस मत्त—त्रयोविंशतिमात्राक हीर हीरनामक वृत्त भवतीति शेष ॥ (E)

२०१ । १ ३ & ५ दरल (B & C) २ थोग (D) ३ दरण (D & F) ४ भक्क (B & C) ५ तरण (D & F) ६ दिगए (A), थोगए (B & C), रिगश्चो (E) ७ स कट (A), ण ल द गढ (D) ति कट (E) ८ दिकट (A), लिकट (B) भ्टकढ (C) इकढ (D), दिकट (E) ९ तुरगश्चो (F) १० दिग्ग ग्रग्गल (A) सक्क सबल (C) ऊक्क सबल (D) ११ दरख (A) सेकख (B), देकख (C), वत्ति (D) पेक्खु (E) १२ परण पत्तिए (A) १३ सुवण (A), सुम्म (B & C) १४ कीत्तिए (C) १५ ९२ (A), २ (F)

अथ जराहिरण (D) [जलहरणम्] ।

पत्र[1] पढम पलइ जहिँ[2] सुणहि[3] कमल मुहि
दह बसु पुणु बसु[4] बिरइ करे
सबपत्र मुणि दिअगण[5] दिअ बिरम[6] सगण
सिरि फणिबइ भण सुकइबरे[7] ।
दह तिगुण करहि[8] कल पुणबि[9] ठब[10] जुअल
इम परि परि टबु[11] चउ चरणा
जइ पलइ[12] कबहु[13] गुरु कबहु[14] ण परिहरु[15]
बुहअण[16] मणहरु[17] जलहरणा[18] ॥ २०२[19] ॥

---

२०० । प्रकारांतरेणाह, हारेति ॥ हार सुप्रिय भण विप्रगण ततो जोहलमते सस्थापय त्रयोदश[विंशति]मात्रा द्वि[?]-स्त्रिधा भिन्नशरीर ॥ हारविप्रौ त्रिधा कार्यौ इत्यर्थ । जोहलो रगण ॥ (G)

---

२०२। १ किअ (E) २ पढइ जइ (B) पलइ जइ (C) पअठइ कलसहि (D) पअठइ कलहि (F) ३ सुणइ (C) विअच (D) सुणहि (E), विकच (F) ४ रस (B), ण (D) ५ कीअ दिअवर (A), किअ दिअ दिअ (B) किअ दिअ गण (C) ६ पअल किअ (A) परहि दिअ (B) परइ किअ (C) परहिअ (E) ७ सुकविबरे (B & C) ८ करह (B & C) ९ पुणुवि (C) १ ठवि (A), धर (D & F) ११ एम परि ठव (B, C & D) एम परि ठवह (E), एम परि ठवउ (F), ए short here १२ परइ (D) १३ कऊहि (B & C) १४ कहवि (A) १५ परिहर (D) १६ बुहिअण (A) १७ मणुहर (D) १८ जणहरण (B, D & F) १९ ९३ (A) २ (F)

२०१ । उदाहरति । धिक्क दरलमित्यादिकमश्वस्य गीघ्रगते-रनुकरण, दौड़ए [योड्डए]—धावति सलीलगतिविशेषाणामनु-करण, रङ्गेण लीलया चरति तुरङ्ग । धूलिभिर्धवला हक्केन शब्दविशेषेण शबला प्रेच्यन्ते प्रबलपदातय, कर्णस्खलति कूर्मस्खलति भुवन भियते कीर्त्या ॥ (C)

२०१ । अथ हीरमुदाहरति धिक्क दलणेति । इद चतुरग-गतिविशेषानुकरण, तथाच धिक्क दलण थोग दलणेत्यनुकृत्य रग —रगे सग्रामे चलति, रिगओ—खुरली कुर्वत, तुरगा । धूलि-धवला सवशब्दा प्रबला पत्तय प्रेच्यते, यदा कर्णस्खलति तदा कूर्म लल[य]ति भूमिर्भरति कीर्त्त्या ॥ (E)

२०१ । यथा ॥ धिक्केति ॥ धिक्केति घोटकगतिशब्दानुकरण, रिगते[ति] न नेत्यनुकरण, रगे चलति तुरगा । धूल्या धवला हक्केन सबला पश्चिवत्प्रबला पदातय, कर्णे चलति कूर्मो लल[य]ति भूमिर्भरति कीर्त्त्या ॥ २ ॥ इति हीरकम् ॥ (G)

२०२ । अथ जलधरच्छन्द । पदे प्रथमे पतति यच शृणु कमलमुखि दश-वसु-रस-वसु-विरतिकर, सर्व्व कार्य्य द्विज-गणस्तत्परत कृतसगण, श्रीफणिपतिर्भणति सुकविवर । त्रिगुण दशाङ्क कला कला पुनरपि स्थापय युगल, एव पर परिस्थापय चतुश्चरणान्, यदि पतति कदापि गुरु कदापि न परिहर बुधजनमनोहरण जलधरम् ॥ शृणु कमलमुखि यच सर्व्वो द्विजगण प्रथमे पतति, कीदृश, परत. कृतसगण, किञ्च दश-वसु-रस-वसु-विरतिकर ॥ यद्यच कदाचिद्गुरु पतति तदा

न त परिहर, स न दोषायेत्यर्थ। मात्रासंख्यामाह, दशाना वैगुण्ये त्रिंशद्भवति पुनरपि द्वय देहि, एव द्वात्रिंशन्मात्रा भवन्ति। एव पद[र] चतुश्चरणान् परिस्थापय इति सुकवि फणिपति-र्भणति। (C)

२०२। अथ जलहरणनामक वृत्त लक्षयति किअ पढमेति। जहि—यत्र सवपअ—सर्वपादेषु पढम—प्रथममादौ किअ—कृता मुणि दिअगण—मुनिद्विजगणा मुनय सप्त तत्संख्याता चतुर्लघुकगणा इत्यर्थ पलइ—पतति, परहि—अनन्तर सप्तद्विज गणोत्तरमिति यावत् दिअ सगण—देहि सगण, एव दह वसु पुणु रस—दशसु मात्रासु वसुषु अष्टसु मात्रासु पुन रसेषु षट्सु मात्रासु इत्यर्थ पुनर्वसुषु इति शेष, अन्यथा द्वात्रिंशन्मात्रा-नुपलब्धि, बिरइ करे—विरति कुरु। दह तिगुण—दश त्रिगु-णिता त्रिंशदित्यर्थ कल—कला करहि—कुरुष्व, पुणवि—पुनरपि ठव जुअल—स्थापय युगल कलाया इति शेष, तथाच द्वात्रिंशन्मात्रा स्थापयेत्यर्थ। एम परि—एव परि एव परिपाट्या ठवक्क चउ चरणा—स्थापय चतुश्चरणान्, अत्र च जइ—यदि पलइ कवक्क गुरु—पतति कदापि गुरु यदि सगणातर्गतगुर्वति-रिक्तोऽपि गुरु पतति, सगणाति[रि]क्तोऽपि गुर्वादिर्मध्यगुरुर्वा गण पततीति यावत्, त[दा] कवक्क ण परिहरु—कदाचिदपि मा परिहर, तदा तमपि दत्त्वा द्वात्रिंशन्मात्रा प्रतिचरण देया-इत्यर्थ। एव च द्विजगणषट्का[द्क्स्या]दौ मध्ये अते वा गुर्वादि मध्यगुरु वा एक गण दत्त्वा अते च सगण दत्त्वा द्वात्रिंशन्मात्रा

बत्तीस होइ मत्ता अंते सगणाइ[1] ठावेहि[2] ।
सब्ब लहू[3] जइ[4] गुरुआ एक्को वा बेवि पाएहि[5] ॥२०३[6]॥

गाहू ।

---

प्रतिचरणं देया इत्यर्थः । इतीदानीमुक्तं भवति, पूर्वं च सप्त-द्विजगणानन्तरं सगणमिति लक्षणद्वयं बोध्यं। हे कमलमुखि वि[?]बुधजनमनोहरणं मुणहि — जानीहि इति श्रीफणिपति सुकवि-वरं भणति इति योजना। सप्तद्विजगणानन्तरं सगणं यत्र प्रतिचरणं पतति, अथवा षट् द्विजगणा एकः कश्चित् मध्य-गुरुर्गुर्वादिर्वा गणः पतति अन्ते च सगण एव यत्र पतति [त]त् मनो[जल]हरणमिति फलितार्थः । (E)

२०२ । पअ इति ॥ पदे पदे स्थापय कलाः सखि विकच-कमलमुखि दशसु वसुषु पुनर्वसुषु ८ विरतिं कुरु, सर्वपदेषु मुनि ७ द्विजगणान् देहि, विरामे सगणं, श्रीफणिपतिर्भणति सुकविवर । दश त्रिगुणिताः कुरु कलाः पुनरपि धारय युगलं, एवं प्रकारेण स्थापय चतुरो गणान्, यदि पतति कदाचिद्गुरुः कदापि न परिहार्यो बुधजनमनोहरं जलहरणं ॥ वसवोऽष्टौ, मुनयः सप्त, द्विजश्चतुर्लघुः ॥ दशेति द्वात्रिंशत्कलाः प्रतिचरणं कार्या इत्यर्थः । जलेति छन्दः ॥ २ ॥ (G)

---

२०३। १ सगणेइ (A) २ ठावेऊ (A, B & C) ठवेहि (D) ३ लऊ (B, C E & F) ४ जऊ (F) ५ वा पाए (B & C), वा पाएहि (F) ६ ९४ (A), ३ (F)

जहा, खुर खुर[1] खुदि खुदि[2] महि घघर रब कलइ[3]
ण ण ण ण[4] गिदि[5] करि[6] तुरअ[7] चले
ट ट ट गिदि[8] पलइ[9] टपु[1] धसइ धरणि धर[11]
चकमक करि बहु[12] दिसि चमले[13]।
चलु दमकि दमकि बलु[14] चलइ पइक बलु[15]
घुलकि घुलकि करि[16] करि चलिआ[17]
बर मणुसअल कमल[18] बिपख[19] हिअअ सल
हमिर बीर[2] जब रण चलिआ[21] ॥ २०४ ॥

जलहरण। (A B, C & F)

---

२०४। १ खुखुदि (A B C D & E) २ खलुकि (A C & E) खुणकि (B) खुलकि (D) ३ घघघर कइ (A), घघर रण रण कसइ (B & C), घघर रब कलहि (D) घररर रवहि (F) ४ णण (A & E) ननन (B), णणणा (C) ५ गदि (B), गदि (C D, E & F) ६ करतर (A), रङ्ग (B & C), रणहि (E) ७ तुरङ्ग (C) ८ टट दिगि (A) टटट गुदि (B) टटटा गदि (C) टटट गदि (D E & F) ९ परइ (D & F) १ टब (E) ११ उरपुर (A) औरअ वपु (B & C) धरणि धणु (D) धरणि वपु (E) १२ चमकइ चउदिसवर (A) चच चमक चउदिसि (B) ठ ठ ठम चउदिस (C), कर बहुदिसि (D), चकमक कहवडई दस (E) १३ चमरे (A, B C D & F) १४ दपु धमकि धमकि दल (A) दपु धमकि झनक झन (B), झपु धमकि झणकि (C), दलु (D) १५ बल (A), पाइक बलु (B & C) १६ घुलुकिकि घुलुकि कलि (A), घनघनकि करि घन (B & C) १७ चलचिअ (A) करिवर ललिआ (D) करिवर ललिए (E) १८ सरण कमण (A) ससर कमलु (B) सबल कमलु (C), सबर करइ (E) १९ विपइ (A) विपक्ख (B & C) २० सल हमिर विर (A), सक्ष हविर वीर (B) सलु हविर वीर (C) २१ जब रज वरण चलिअ (A), जहि रणे चलिआ (B & C), जइ रण चलिए (E)

२०३। इदमेव संक्षेपेणाह। द्वात्रिंशन्मात्रा अन्ते सगणमुत्थापय। सर्व्वलघवो यदि गुरुरेको वा द्वौ वा पादे ॥ (C)

२०३। अथैनमेवार्थं गाहूच्छन्दसा स्पष्टयति बत्तीसेति। मनो-[जल]हरणच्छन्दसीत्यध्याहार। बत्तीस होइ मत्ता — द्वात्रिंशद्भवति मात्रा, अंते सगणाइ ठावेइ[हि] — अंते सगणं स्थापय, कर्त्तव्यासु द्वात्रिंशन्मात्रासु अंतिमं मात्राचतुष्टयं सगणस्वरूपं कार्यमित्यर्थं, पाएहि — पादेषु आदौ सब्ब लहु — सर्वे लघवो भवति, यदि चेदेक गुरु बेवि — द्वौ वा गुरू भवतस्तदा न दोष इत्यर्थ, तथाच सप्तद्विजगणानंतरं सगणं कार्यं, अथवा षट् द्विजगणा, तेषामादौ अंते मध्ये वा एकं गुर्वादिर्मध्यगुरुर्वा गणं कार्यं, सर्वेषामंते च सगणो देय इति फलितार्थं। अतएव उदाहरणे चतुर्थचरणे रबीरेति षष्ठो जगणो दत्त इति द्रष्टव्यम्। (E)

२०३। पुन प्रकारांतरेणाह॥ बत्तीति॥ द्वात्रिंशद्भवति मात्रा अंते सगणं स्थापय। सर्वे लघवो यदि गुरुरेको वा द्वौ वा पादे॥ सर्वे लघव एव कार्या कदाचिद्गुरु कृतश्चेदेको द्वावित्यर्थं ॥३॥ (G)

२०४। उदाहरति। खुलुकीति अश्वगतिविशेषानुकरणं, यया गत्या मह्यां खुरेण चोदिता रङ्गेण तुरङ्गश्चलतीत्यन्वय। बलगेति [?] शब्दानुकरणं, बलग [?] दत्त्वा, घर्घर क्षुद्रघण्टिका। ट ट टा इति धावदश्वखुरशब्दविशेषानुकरणं, तादृशशब्दं ददत टापा खुराघाता पतन्ति हृष्टं भवति तुरगधावनं। ठ ठ ठेत्यनुकरणं, चमत्कृतं चतुर्दिक्षु चामरै, द्रपु द्रणकि द्रण द्रणिति चरणशब्दविशेषानुकरणं, चलति पदातिघटा, भुणुकि

शुण्कोति हस्तिगत्यनुकरण, तादृशशब्दानुकरणेन करिवराश्चलिता-श्चलति मनुष्यबल। मनुष्या पदातिव्यतिरिक्ता सेवकादय। विपक्षहृदये शल्य हम्मीरवोरो यदा च रणे चलित ॥ (C)

२०४। अथ मनो[जल]हरणमुदाहरति खुर इति। खुर—खुरै महि—महीं खुदि—चोभयित्वा, खुलुकि ण ण ण टदि इत्यनुकृत्य, घघरु रव कलहि—घर्घरेति रव कृत्वा ह्रेषा विधायेत्यर्थ रणहि—रणे सग्रामे तुरग्र चले—तुरगाश्चलिता, ठ ठ टदीत्यनुकृत्य टपु—टाप अश्वपादाघातादित्यर्थ पलइ—पतति, तेन च धरणि वपु—धरणीधसु[वपु] पृथ्वीशरीर धसइ—प्रचलति, बक्क दिसि—चतुर्दिचु चमले—चामराणि चकमक करु—कुर्वंति चाकचिक्यशोभासुत्पादयतीत्यर्थ। दलु—दल सैन्य दमकि दमकि—अहमहमिकया चलु—चलित, चलति पदातिबल, घुलुकि घुलु[की]त्यनुकृत्य करिवराश्चलिता, वर मनुसवर—सत्पुरुषवर करइ विपख हिअअ सल—करोति विपचहृदयेषु शल्य, हमिरवीर—हम्मीरवीर यदा च रणे चलित ॥ (E)

२०४। यथा ॥ खुरेति ॥ खुरै २ सचूर्ण्य महीं घरेति रवेणेति कृत्वा तुरगाश्चल[ति], ट टेत्यादि पतति खुराघातो धसति [ध्वसते] धरणीधर, चमत्कुर्वंति वक्रदिक्षु चामराणि। चलति दमेति बल चलति पदातिबल, घुलेत्यादि कृत्वा करिणश्चलिता, वरमानुषसगकमल-विपचहृदयशल्ये हम्मीरवीरे जवेन रणे चलिते ॥ इति जलहरणम् ॥ (G)

## अथ मअणहरा । (D)

पिअ भणमि[1] मणोहरु[2] पेल्लि[3] पओहरु[4]
सुहव[5] सुहाव[6] खणड्ड[7] खणो थिर[8] करहि मणो[9]
जइ राअ[10] बिबत्तिउ[11] अणुसर[12] खत्तिउ[13]
कड्ढिकए[14] बहि[15] छंद[16] भणो[17] जिमि[18] खलइ रिणो[19]।
बिबि सक्क पहिल्लिअ[20] तुरअ बहिल्लिअ[21]
हअ गअ पअ[22] पसरंत[23] धरा गुरु सज्जिकरा[24]
जइ जग्गि[25] णिरुत्तउ[26] दह गण जुत्तउ[27]
चउ संधिहि[28] चालीस धरा[29] भणु मअणहरा ॥ २०५[30] ॥

---

२०५। अथ मदनगृह ॥ प्रिये भणामि मनोहर दूरीकृत्य

---

२०५। १ भणइ (A & E) २ मणोहर (A) ३ मिल्लि (A), मेल्लि (B) ४ पओहर (A), टओहव (D) ५ सुभग (B) सुभअ (C) सुहअ (D & E) ६ सुहावह (A) ७ कवणड (B) सुणिड (D & F) ८ खणे त्थिर (C) ९ करवि मणो (A B & C) १० राउ (B), राअउ (F) ११ विउत्तिउ (B), विमत्तिअ (D), बमतिअ (F) १२ अनुसरि (E) १३ खत्तिअ (D & F) १४ कड्ढिकए (A & E), कडढिउए (B) कढ्ढिकए (C), कड्ढकए (F) १५ एव्वहि (F) १६ च्छन्दु (C) १७ मणो (D) सुणे (E) १८ Non est up to हि in the fourth quadrant in (B), जेम (C, D & E), जम (F) १९ खलवि मणो (A) खलह रिणो (C), खलिअ रिणो (E) २० पहिल्लिअ (C) २१ रहि ल्लिअ (C) २२ गअ हर पअ (A) गअ रह पह (C), गअ रप हेअ (E) २३ पसरति (A) पसरणु (C) २४ सज्जिवरा (A), सजिधरा (C), सन्निधरा (D) सज्जिकरा (E) २५ ठइ सगण (A), जइ सग्गि (C), तइ जग्गि (E) २६ णिउत्तउ (A) णिरुत्तेउ (E) २७ दह गण वुत्तेउ (E) २८ Transposed in (A) २९ कला (A) ३० ९६ (A), ५ (F)

पयोधर सुभगे सुभगवति चणार्द्धं चण स्थिर कृत्वा मन, यदि रागो वर्त्तते अनुसर चचियमाकृष्य कृत्वा हि छन्दो भणामि यथा स्खलति स्तण। द्वे ग्रन्थे प्रथमत तुरगावहिता स्थिता गजरथा पदे प्रसरन्ति धरा गुरु सञ्जीकृत्य धारय यदि या[जा]गरहा-निरुच्यते, दशगणयुक्त चतु सन्धिषु चत्वारिंशद्गृह भण मदनगृह॥ यदि वास्तवो रागो भवति, तदा चचिय राजानमनुसर। राजात्र प्रस्तार एव, अहमपि तत एवाकृष्य वहि कृत्य भणामि यथर्षपरि-शोधन कृत्वा सुखयति तथेदमपि। तत्र गणव्यवस्थामाह द्वे इति, आदौ लघुद्वय, तुरगराजरथशब्दास्तुष्कलवाचकास्तत्र गणा धरा पर्व्वता स्थिरा कार्य्या इति भाव। अन्ते गुरुर्द्वय, आदिमलघु-द्वय, चरमगुरुस्वरणान्ते पततीति, तदिदमुक्त सगणयुक्त सन्धिपद, चत्वारिंशद्गृह चत्वारिंशत्स्थान चत्वारिंशतकलमित्यर्थ। अयमर्थ चतुष्कला दश गणा कार्य्या अन्ते गुरुरादौ च लघुद्वयम्, इदन्तु बोध्यमादौ लघुद्वयस्य न नियम। (C)

२०५। अथ मदनगृहनामक वृत्त लचयति पिअ भणईति। हे सुहअ सुहाव — सुभगस्वभाव पिअ — प्रिय शिष्य, जइ — यदि राअ — राग पठितु वा इच्छा विवत्तिउ — विवर्त्तते विशेषेण वर्त्तत इत्यर्थ, तदा खत्तिअ — चचिय प्रस्तारम् अणुसरि — अनु-सृत्य, चचिय इति प्रस्तारशसी पूर्वाचार्याणा, पओहर — पयोधर मध्यगुरु जगण पेल्लि — प्रेरयित्वा प्रस्तारानुसारेण जगणमेत-च्छन्दसो दूरीकृत्येत्यर्थ, अत्र जगणो न देय इति भाव। छद — इद छद कड्डि[ड्डि]कए वहि — निष्काशयित्वा वहि अर्थात्

प्रस्तारादिद छन्द पृथक्कृत्वेत्यर्थ, खणद्ध खणो — चणमर्द्धचण वा मणो — मन थिर करहि — स्थिर कुरु, जइ — यदा विवि सल्ल — द्वौ शल्यौ द्वे मात्रे ते च लघुद्वयरूपे एकगुरुरूपे वात्र नागइ, यद्यपि शल्यशब्द लघुवाची तथाप्यत्र सामान्यमात्रापरो बोध्य उदाहरणे प्रथमद्वितीयचरणयोर्लघोस्तृतीयचतुर्थयोश्च गुरोर्दर्शनात्, अनुपद दोहाकृते लचणे वे वि मत्तेति वच्यमाणत्वाच्चेति ध्येय, पहिलिअ — प्रथम गृहीत्वा पादादौ द्वौ लघू स्थापयित्वेत्यर्थ, सज्जिकरा — सज्जीकृत गुरु — गुरु बहिलिअ — वहिर्गृहीत्वा वहि' पादान्ते, तथाच चरणान्ते गुरु स्थापयित्वेत्यर्थ, तुरग गज रथ एते दह गण — दश गणा पस — पादे धरा — धृता पसरत — प्रेर[य]ति । तुरगादयश्चतुष्कलदशगणदानबोधनार्थमुपनिबद्धा । एव च दीयमानेषु दशचतुष्कलेषु आदौ मात्राद्वय लघुद्वयरूपमेकगुरुरूप वा, अन्ते चैकगुरुरूप देय, न तु दशगणातिरिक्तमिति भाव । एव च चालीस — चत्वारिंशन्मात्रा इति शेष' घरा — घटिता वुत्तेउ — उच्यते, दशचतुष्कलाना प्रतिचरण चत्वारिंशन्मात्रा पततीत्यर्थ, तइ — तदा जग्गि णिरुत्तेउ — जागरण कृत्वा निरुक्त, जागरणमत्र सावधानतोपलचणार्थं, तथाच सावधानतया पिगलेन निरुक्तमित्यर्थ, मअणहरा — मदनगृहनामक वृत्त भणु — पठ एवैनच जेम — यथा खलिअ रिणो — स्खलदृण तथा मणोहरु — मनोहर मुणो — जानीहि, यथोपचितमृण[मु]-द्भूरीभवच्चित्ताह्लादक भवति तथा श्रूयमाणमेतच्छन्द इत्यर्थ, इति भणइ — भणति, अर्थात् पिगल इति भाव इति योजना ॥ (E)

बेबि मत्त सिर[1] ठाबि कहु[2] बलआ अंत ठवेहु[3] ।
णव चउकल[4] गण मज्झ[5] धरि[6] मअणहराइ[7] करेहु[8] ॥
२०६[9] ॥ दोहा ।

---

२०५ । पिअ इति ॥ प्रिय भणामि मनोहर परित्यज्य पयोधर सुभगस्वभाव स्निग्ध चण स्थिर कुरु मन, यदि राजान वा मत्रिणमनुसरसि चचिय कौतुकादेव हि छदो भण, यथा खलप्रेरक । पयोधरो जगण, राजादिवर्णनादौ प्रशस्त मनोरजक चेति भाव । केचित्तु यथा स्खलति चण, यथा चण स्मृतिपथमुपैति तथैव छद इत्याङ्ग । बीति ॥ द्वौ शल्यौ प्रथम तुरग पश्चात् हयगजपदातीन् प्रसरणशीलान् धारय, गुरु सज्जीकुरु, यदि शाला निरुच्यता दशगणयुक्त चतुर्षु पादेषु चत्वारिंशद्वधारय, भण मदनहर ॥ शल्य लघु, तुरगादयश्चतुर्माचिका गणा नव कार्या अते गुरुरेव प्रतिचरण दश गणा, तेषा च चत्वारिंशन्माचा भवति इति भाव ॥ ५ ॥ (G)

२०६ । किन्तु तदिदमभिसन्धायाह, बेबीति । द्विमाच शिरसि स्थापयित्वा बलयमन्ते कुरु । नव चतुष्कलान् गणान् मध्ये धृत्वा मदनगृह कथय ॥ शिरसि आदौ । (C)

---

२ ६ । १ सि (B) सिरि (D & F)  २ कइ (E)  ३ करेङ (A & C), करेह (B) कनेङ (E)  ४ चोकल (E)  ५ मभझ (E)  ६ करि (A, B & C)  ७ मअणहराअ (A)  ८ कनेङ (E), कहेङ (F)  ९ ९० (A), ६ (F)

जहा,

जिणि[1] कंस बिणासिअ कित्ति पआसिअ
मुट्ठि अरिट्ठि[2] बिणास करे[3] गिरि हत्थ[4] धरे[5]
जमलज्जुण भंजिअ पअभर[6] गंजिअ[7]
कालिअ कुल संहार करे[8] जस भुअण[9] भरे ।
चाणूर[10] बिहंडिअ णिअकुल[11] मंडिअ
राहा मुह महु पाण करे[12] जिमि[13] भमरवरे
सो तुम्ह[14] णाराअण[15] बिप्प पराअण[16]
चित्तह चिंतिअ[17] देउ बरा[18] भअ भीअ हरा[19] ॥

२०७[20] ॥ मअणहरा । (A, B, C & F)

---

२०६ । अथैनमेवार्थं निश्चित्य दोहावृत्तेनाह बेबि मत्तेति । द्वे अपि मात्रे शिरसि आदौ ठाबि कइ — स्थापयित्वा, अते बलआ

---

२०७ । १ जेन्हि (A), जषि (B), जषि (C), जिण (F)   २ रिट्ठिश्च मुट्ठि (A), मुट्ठिश्च रिट्ठि (D), श्चट्ठिश्च मुट्ठि (E)   ३ करु (A, C & E), करु (B & D)   ४ तोरि (A), तोलि (B & C)   ५ धरु (A, C & E), धरु (B & D)   ६ Dropt in (B), पश्चभार (C)   ७ Dropt in (B) गजिर (F)   ८ राहा मुह मङ्ग पाण करे जिमि भमर बरे (A) कालीकुल सहार करे (D)   ९ जसे भुश्चण (B & C), जसु भुवण (F)   १० चणूर (A), चणजर (B & C), चाणर (E)   ११ कुल (B), णिजकुल (C)   १२ कालिश्च कुल सहार करु जस भुवण भरु (A)   १३ जषि (B & C), जिम (E)   १४ सो तुम्हहि (A), सोइ तुम्म (B), सोइ तुम्ह (C), सो तुम्ह (D), सी तुए (E)   १५ नारायण (B), नरायण (E)   १६ असुर बिदारण (A), पिप्प परायण (B)   १७ चित्तिकि चिन्तिश्च (B), चित्तिहि चिन्तिश्च (C), चित्त मह चितिश्च (F)   १८ बरु (A), बरो (F)   १९ भश्च भीति हरु (A), भब भीइ हरा (B & C), भश्च भीउ हरो (F)   २० ९८ (A), ७ (F)

—वलय गुरु कुरुत । मध्ये—मध्ये द्विमात्रागुर्वोरन्तराले इत्यर्थ नव चतुष्कलगणान् धरि—स्थापयित्वा मदनगृह कथयत ॥ (E)

२०६ । वे इति ॥ द्वे द्वे मात्रे आदौ [स]स्थाप्य कथय वलयमते स्थापय । नव चतुष्कलान् गणान् मध्ये धारय, मदनहर कथय ॥ ६ ॥ (G)

[After this the following verse is inserted in (D), but not in any other of the MSS — Ed ]

किच

चउ अधिहि चालीस कल दह गण तत्थ मुणेहु ।

पअहर वज्जिअ हे सुपिअ मअणहराइ कुणेहु ॥ दोहा ।

२०७ । उदाहरति ॥ येन कसो विनाशित कीर्त्ति प्रकाशिता मुष्टिकारिष्टिविनाशीकृत गिरिस्तोलयित्वा धृत यमलार्ज्जुनौ भञ्जितौ पदभरेण गञ्जितकालियकुलसहार कृत, यस्य यशसा पूरित भुवन । चाणूरो विखण्डित, निजकुल मण्डित, राधामुख-कमल[?]मधुपान कृत यथा भ्रमरवरेण । भसरेति क्वचित् पाठ, भसरो भ्रमर । स युष्माक नारायण असुरपलायन चित्ते चिन्तित वर ददातु भवभीतिहर ॥ असुराणा पलायन यत स तथा। (C)

२०७ । अथ मदनगृहमुदाहरति, जिणेति । येन कस विनाशित कीर्त्ति प्रकाशिता रिष्टकमुष्टिकयो दैत्ययो विनाश कृत गिरिर्गोवर्द्धनो हस्ते धृत यमलार्जुनौ वृत्तौ[चौ] भग्नौ पादभरगजितकालियकुलस्य सहार कृत, यस्य यशसा भुवन भृत। चानूरो नाम दैत्य विपादित, निजकुल मण्डित,

अथ मरहट्ठा । (D)

एहु छंद सुलखण[1] भणइ[2] बिअक्खण[3]
जंपइ पिंगल णाउ[4]
बिसमइ दह अक्खर पुणु[5] अट्ठक्खर[6]
पुणु[7] एगारह[8] ठाउ[9] ।
गण आइहि[10] छक्कलु[11] पंच चउक्कलु
अंत[12] गुरु लहू[13] देहु[14]
सउ[15] सोलह अग्गल मत्त[16] समग्गल
भण[17] मरहट्ठा[18] एहु ॥ २०८[19] ॥

---

राधामुखमधुपान कृत यथा भ्रमरवर । भ्रमरो यथा कमलमकरन्दपान करोतीत्यर्थ । स नारायण विप्रपरायण भवभीतिहर चित्तचित वर ददातु ॥ (E)

२०७ । यथा जिणेति ॥ येन कंसो विनाशित कीर्त्ति प्रका-

---

२०८। १ सुलक्खण (A, D & E), सुलच्छण (B & C) २ भणहि (E), भणउ (F) ३ बिष अक्खण (A), बिलक्खण (B), बिष लक्खण (C) ४ णाओ (A & E) ५ पुणि (A), पुण (B) ६ अठठक्खर (A & E), अट्टर (B), dropt in (C), अठक्खर (F) ७ पुणि (A), पुणुवि (E) ८ इग्गारह (B, C & F), एग्गारह (D & E) ९ ठाओ (A) १० आईहि (D) ११ छक्कल (B) १२ अते (F) १३ गुरू लऊ (A & F), गुर लऊ (B, C & E) १४ देह (B) १५ सत (A), सऊ (B) १६ मत्ता (D) १७ भणु (D), dropt in (F) १८ मरहठठा (A, E & F), मरहट्ठा (B), मरहट्टा (C) १९ ९९ (A), ८ (F)

र्न्निपतिता सकलापि दृष्टिर्वर्तन्ते ते तिलजलाञ्जलिदानयोग्या ॥ कर्पूरमञ्जरीनाटके राज्ञो वचनम । (H)

१५२। सम्भालय चरणगण पतितो मुखे सस्थाप्य पुनर्द्विजवर-युगल। त करतलगण पदे स्थापयित्वा ज्ञात चक्रपदो भणता फणिपतिभणित ॥ चरण आदिगुरुश्चतुष्कल, करतलगणोऽन्तगुरु-श्चतुष्कल । (C)

१५२। अथ चतुर्दशाचरचरणस्य वृत्तस्यैक[नवत्युत्तरैक]शताधि-काष्टसहस्रतम ८१९१ भेद चक्रपदनामक वृत्त लचयति, सभणिअ इति। मुहो—मुखे प्रथममिति यावत पलिअ—पतित चरणगण गुर्वादिभगणमित्यर्थ सभणिअ—सभण, पुणवि—पुनरपि दिअ-वर जुअलो—द्विजवरजुगल चतुर्लघ्वात्मकगणद्वयमिति यावत सठ-विअ—सस्थाप्य। ज—यच्च पअ पअ—पादे पादे प्रतिचरण-मिति यावत करअल गण—करतलगण गुर्वन्त सगण इति यावत् मुणिओ—ज्ञात, तत फणिवइ भणिओ—फणिपतिभणित चक्क-पअ—चक्रपद प्रभण ॥ (I)

१५२। सभेति। सभण चरणगण पतित मुखे सस्थाप्य पुनरपि द्विजवरयुगल। यच्च करतलगण पदे पदे च ज्ञात चक्रपद भण फणिपतिभणित ॥ चरणो गुर्वादिर्भगण, द्विजवरश्चतुर्लघु, करतल सगण । (G)

१५२। सभणिअ इत्यादि। सभणितश्चरणगण पतितो मुखे सस्थापय पुनरपि द्विजवरयुगल। तत करतलगण पदतले ज्ञायते चक्रपद शृणु फणिपतिभणित ॥ चरणगणो भगण, मुखे आदौ,

जहा, खंजण जुअल णअण बर उपमा
चारु कणअ लइ भुअजुअ सुसमा[1] ।
फुल्ल कमल मुहि गअ[2]बर गमणी
कस्स[3] सुकिअ[4] फल बिहि[5] गठु[6] तरुणी[7] ॥ १५३[8] ॥

चक्रपदम्[9] ।

---

पतित सभणित, पुनरपि द्विजवरयुगल सस्थापय, द्विजवरश्चतुर्लघुगणस्तयोर्युगलमष्ट लघव इत्यर्थ, तत करतलगण सगण पदतले चरणे ज्ञात, तलशब्द स्वरूपवाचक, फणिपतिभणित त्व शृणु इत्यन्वय । (H)

१५३ । उदाहरति। खञ्जनयुगल नयनवरस्य उपमा चारु कनक नीता भुजयुगस्य सुषमा । फुल्लकमलमुखी गजवरगमनी कस्य सुकृतस्य फल धात्रा घटिता रमणी ॥ (C)

१५३ । चक्रपदमुदाहरति, खजणेति । अत्रावहट्टभाषाया पूर्वनिपातानियमात् उपमा शब्दस्य पूर्वनिपात कृत्वा योजनीय, तथाच खजनजु[यु]गलोपमनयनवरा खजनयुगलस्य उपमा ययो तादृशे अपि नयने ताभ्या वरा रमणीयेत्यर्थ, चारु कणअ लइ भुअजुअ सू[सु]समा — चारुकनकलताभुजयुगसुषमा चार्व्वी कनकलताया-इव भुजयुगस्य सुषमा यस्यास्तादृशीत्यर्थ, फुल्ल कमल मुहि—

---

१५३ । १ सूसमा (E) dropt in (F) २ Dropt in (B) ३ तुम्ह (A), तु (B) ४ सूकिब (E) ५ बिह्न (A) ६ गढ (F) ७ रमणी (A, B & C) ८ १४९ (A) ९ चक्रपाद (C)

कर पंच पसिद्ध[1] बिलद्ध[2]बरं रअणं[3]
पभणंति[4] मणोहर छंदवरं रअणं ।
गुरु पंच दहा लहु एरिसिअं[5] रइअं[6]
भमराबलि छंद पसिद्ध किअं ठविअं[7] ॥ १५४[8] ॥

---

फुल्लकमलमुखी गअवर गमणी — गजवरगमना रमणी ललना कस्स सु[सु]किअ फल — कस्य सुकृतफलेन विधिना गठु — सृष्टा ॥ एतादृशी कान्ता कान्तिभाविता कस्य पुण्येन ब्रह्मणेय निर्मितेत्यर्थ । चक्रपद निवृत्त। (E)

१५३। यथा। अवहट्टभाषाया पूर्वनिपातादिनियमाभावात् यथोचिता योजना कार्या सर्वत्रेति बोध्य। खञ्जनयुगलनयनवरोपमा चारुकनकलताभुजयुगसुषमा। फुल्लकमलमुखी गजवरगमना कस्य सुकृतफलेन विधिना निर्मिता तरुणी ॥ (G)

१५३। उदाहरणमाह, खञ्जण इत्यादि। खञ्जनयुगलनयनवरोपमा चारुकनकलताभुजयुगसुषमा। फुल्लकमलमुखी गजवरगमना कस्य सुकृतफलेन विधिना निर्मिता रमणी ॥ खञ्जनयुगलेन नयनवरयोरुपमा यस्या सा, चारुकनकलतावद्भुजयुगस्य परमा शोभा यस्या सा। चतुर्दशाक्षरप्रस्तारस्य चतुरधिकाशीतिशतत्रय षोडशसहस्र भेदास्तेषु भेदद्वयमुक्त, शेषभेदा स्वय ज्ञेया । (H)

---

१५४। १ सिद्ध (F) २ तिलद्ध (A & B), सुलद्ध (C) ३ वम्मण (A) ४ पभणंत (A) ५ एरिसिर (A) ६ लविश्र (A), लपिश्र (B & C), dropt in (E) ७ ठरश्र (E) ८ १५० (A)

१५४ । अथ पञ्चदशाक्षरा यथा । करपञ्चक प्रसिद्ध सुलक्षवर रत्न प्रभणन्ति मनोहरच्छन्दोवर रमण । गुरव पञ्च दश लघव एतादृश लब्ध भ्रम[रा]वलीच्छन्द प्रसिद्धीकृत स्थापित ॥ करोऽन्तगुरुस्वतुष्कल । (C)

१५४ । अथ पञ्चदशाक्षरचरणस्याष्टषष्ठ्युत्तरसप्तशताधिकद्वात्रिंशत्सहस्र ३२७६८ भेदा भवति, तत्र त्रय[चतु]श्चत्वारिंशोत्तरचतुर्दशसहस्रतम [१४०४४] भेद भ्रमरावलीनामक वृत्त लक्षयति । यत्र पसिद्ध—प्रसिद्धै पञ्च—पञ्चभि कर—करै गुर्वन्तसगणैरिति यावत् विलद्ध बर — विलद्ध[ब्ध]वरमतिरमणीयमिति यावत् रअण —रचन किअ—कृत, गुरु पञ्च—पञ्च गुरव दहा लहु—दश लघव पसिद्ध—प्रसिद्धास्तत् मणोहर—मनोहर छदवर—छन्द-श्रेष्ठ रअण—रत्न रत्नप्रायमिति यावत रइअ—रचित ठइअ—स्थापित पिंगलेनेति भाव, एरिसिअ—एतादृश भमरावलि छद—भ्रमरावलीच्छन्द पभणति—प्रभणति पण्डिता इति शेष ॥ अत्र छन्दोविशेषण भिन्नतया लघुगुरुकथन च पद्यपूरणार्थमिति मतव्य, सगणपञ्चक-रचितचरणा भ्रमरावलीति फलितार्थ । (E)

१५४ । अथ पञ्चदशाक्षरातिशक्करी ॥ करेति । करै पञ्चभि प्रसिद्धैरतिरमणीयरचन प्रभणति मनोहर छदोवर रत्न । गुरव पञ्च दश लघव ईदृश रचित भ्रमरावलिच्छद प्रसिद्धकृत स्थापित ॥ कर सगण । (G)

१५४ । पञ्चदशाक्षरप्रस्तारस्य कानिचिच्छदांसि वदति । कर पञ्चेत्यादि । करा पञ्च प्रसिद्धा, तिलार्द्धेन वर वचन प्रभणन्ति

जहा, तुअ देव[1] दुरित्त गणा हरणा चरणा[2]
जइ पावउ[3] चंदकलाभरणा सरणा ।
परिपूजउ[4] तेज्जिअ[5] लोभमणा[6] भवणा[7]
सुख दे मह[8] सोक[9] विणास[10] मणा समणा ॥
१५५[11] ॥ भ्रमरावली ।

---

मनोहर छदोवर रत्न। गुरव पच दश लघव एतादृश लपित भ्रमरावलीच्छद प्रसिद्ध छला स्थापित॥ करा सगणा पच प्रसिद्धास्तिलार्द्धेन अतिशीघ्रतया उत्कृष्ट वचन यस्य छदस उच्चारण-मित्यर्थ, भ्रमरावलीति छद प्रभणन्ति। (H)

१५५। उदाहरति। तव देव दुरितगणहरणौ चरणौ यदि प्राप्येते हे चन्द्रकलाभरण शरण। तदा पूज्येते त्यक्त्वा लोभमनो-भ्रमण सुख प्रेर्य्यते लोकविनाशमना शमन॥ लोभयुक्तस्य मनसो-भ्रमण लोभमनोभ्रमण, प्रेर्य्यतेऽवकीर्यते। (C)

१५५। भ्रमरावलीमुदाहरति, तुअ देवेति। हे चन्द्रकला-भरण देव दुरित्त गणा हरणा—दुरितगणहरणौ तुअ—तव चरणौ जइ—यदि सरणा—शरणे पावउ—प्राप्नोमि, तदो[दा]

---

१५५। १ तुह देह (A), तुद देब (C) तुह देव (F) २ Dropt in (E) ३ पावउ (A) ४ परिपूजउँ (A), परिपुज्जउ (C) परिपूज्जउ (F) ५ तेज्जिए (A), dropt in (B) ६ लोभवणा (B) ७ भमणा (A), dropt in (C & F) ८ सुह पेलेउ (A) सुख पेक्खिउ (B & C), सुख दे मह (F) ९ लोक (A & C), लो (B) १० Dropt in (B) ११ १५१ (A)

कस्रा दिस्रा मत्ता अंते एक्का[1] हारा[2] माणीआ[3]
पक्षाराहा[4] हारा सारंगिक्का[5] छंदा जाणीआ।[6]
तीसा मत्ता पाए पत्ता[7] भोई राआ जंपंता
छंदा[8] किज्जे[9] कित्ती लिज्जे[10] स्रणी मंथा[11] कंपंता॥
१५६[12]॥

---

[लो]भमणा — लोभे मन भवणा — भवन च तेज्जिअ — त्यक्का परिपूजउ — परिपूजयामि, हे सोक विणास मणा — त्रिभुवनतल-वर्त्तियावज्जीवशोकनिवारणमना इत्यर्थ, हे समणा — हे शमन मह — मह्य सूख — सुख लच्चरणाराधनोद्भूतनित्यानदमिति यावत् दे — देहि॥ कस्यचिद्भक्तस्य महादेवप्रार्थनावाक्यमेतत। भ्रमरावली निवृत्ता। (E)

१५५। यथा। तव देव दुरितगणहरचरणौ यदि प्राप्नोमि चद्रकलाभरण शरण। पूजयामि त्यक्का लोभे मनो भवन सुख देहि मम शोकविनाशमन शमन॥ (G)

१५५। उदाहरणमाह, तुम्र देव इत्यादि। तव देव दुरित-गणहरणौ चरणौ यदि प्राप्नोमि चन्द्रकलाभरणौ शरण। परि-पूजयामि त्यक्का लोभे मनो भवन सुखेन प्रेरयामि शोकविनाश-

---

१५६। १ एका (C) २ हरा (B) ३ पाई (A) जाणी (B) ४ पक्षा राही (F) ५ सारगिका (C) ६ द्वितीय पाद dropt in (B) ७ पाए पाएँ (A), पत्ता dropt in (B) ८ चो बदा (A) चोक्कन्दाक्षा (B & C) ९ विज्जे (A) १० Non est (B & C) ११ मत्था (A), मत्था (B & C) १२ १५२ (A)

मनश्च शमन॥ हे देव तव चरणौ यदि शरण प्राप्नोमि, तदा लोभे मनो भवन त्यक्त्वा त्वा परिपूजयामि, सुखेन प्रेरयामि दूरे चिपामीत्यर्थ, शमन यम, चरणौ कीदृशौ चन्द्रकलाभरणौ इत्यनेन नखाश्चन्द्रकलावद्दर्णिता । (H)

१५६ । कर्णगणा सप्त अन्ते एको हार पादे पादे पञ्चदश वर्णा सारङ्गिकाच्छन्दो गीयते । चिंशन्मात्रा पादे युक्ता भोगिराजो जल्पति पादा क्रियन्ते कीर्त्तिर्गृह्यते सर्व्वेषा मस्तक कम्प्यते॥ एतादृश गीयत इति भोगिराजो जल्पति, चत्वार पादा, तेन कीर्त्तिर्गृह्यते, सुखातिशयात् सर्व्वेषा शिर कम्पो भवति । (C)

१५६ । अथ पचदशाचरचरणस्य वृत्तस्य प्रथम भेद सारगिकानामक वृत्त लचयति, कणेति । सत्ता कणा — सप्त कर्णा गुरुद्वयात्मका गणा इति यावत दिया — दीयते दत्ता दत्त्वा वेत्यर्थ, अते — सप्तकर्णाते एक्का हारा — एको हार गुरुरित्यर्थ माणीआ — मान्यते, एवप्रकारेण यच पाए — पादे पत्तारहा — पचदश हारा — गुरव मत्ता — माचास्त तीसा — चिंशत् पत्ता — प्राप्ता जाणीआ — ज्ञायते, यच सूणी — श्रुत्वा मथा — मस्तक कपता — कपते श्लाघत इति भाव, तत सारगिक्का छदा — सारगिकाच्छन्द इति भोई राआ — भोगिराज पिगल जपता — जल्पति, कि च एतत् छदा — छद किज्जे — क्रियते कित्ती — कीर्त्ति लिज्जे — गृह्यते॥ अच माचाकथन चतुर्थस्वरणस्य पद्यपूरणार्थमिति ध्येय, पचदशगुरुरचितचरणा सारगिकेति निष्कृष्टोऽर्थ । (E)

जहा, मत्ता जोहा बठ्ठे[1] कोहा[2] अप्पा अप्पी[3] गव्वीआ
रोसारत्ता सव्वा गत्ता[4] सल्ला[5] भल्ला उठ्ठीआ[6] ।
हत्थी[7] जूहा[8] सज्जा हूआ पाए भूमी कंपंता
लेही देही[9] छड्डो[10] ओड्डो[11] सव्वा सूरा जंपंता ॥
१५७[12] ॥ सारंगिका ।

---

१५६ । कर्णेति । कर्णा दीयते सप्ताते एको हारो रमणीय पचदशापि हारा सारगिकाच्छदो जायते । चिशन्मात्रा पादे प्राप्ता भोगिराजो जल्पति, छद क्रियते, कीर्त्तिर्गृह्यते, श्रुत्वा मस्तक कपते ॥ कर्णो द्विगुरु । (G)

१५६ । कर्णा दिस्रा इत्यादि । कर्णा सप्त दत्ता अन्ते एको-हारो ज्ञायते पचदश हारा सेर * * * । (H)

१५७ । उदाहरति । मत्ता योधा उत्थिता क्रोधादात्मना गर्व्वायमाणा रोषारक्ता सर्व्वे गत्वा शल्य भल्लम उत्थापयन्ति । हस्तियूथा सज्जीभूता पादेन भूमि कम्पयन्ति गृहाण देहि त्यज उत्तिष्ठ सर्व्वे शूरा जल्पन्ति ॥ (C)

१५७ । सारगिकामुदाहरति । मत्ता — उन्मत्ता अप्पा अप्पी गव्वीआ — अहमहमिकया गर्विता बठ्ठे कोहा — वर्द्धितक्रोधा

---

१५७ । १ दिठठे (A), उट्ठे (B), उट्ठे (C)    २ कोवा (C)    ३ अप्पे (A)
४ गात्ता (B)    ५ सेल्ला (A, B & C)    ६ उच्छीआ (B & C)    ७ हत्थी (A)    ८ जूथा (B & C)    ९ Dropt in (C)    १० छड्डो (B), च्छड्डो (C)
११ ओड्डा (B), उड्डो (C)    १२ १५१ (A)

चामरस्स[1] बीस[2] मत्त तीणि[3] मत्त अग्गला
अट्ठ[4] हार सत्त सार ठाइ ठाइ णिम्मला ।
आइ अंत हार[5] सार[6] कामिणी मुणिज्जए[7]
अक्खरा दहाइ पंच पिंगले भणिज्जए ॥ १५८[8] ॥

रोषारत्ता सव्वा गत्ता — रोषारक्तसर्वगात्रा जोहा — योद्धार ज्ञाता, सल्ला — शल्यानि भल्लास्त्र आयुधविशेषा उट्ठीआ — उत्थिता । हत्थी जूहा — हस्तियूथानि सज्जा — सज्जितानि हुआ — जातानि, तेषा पाए — पादै भूमी — भूमि कपता — कम्पिता, लेही — गृहाण देही — दे[हि] छड्डो — त्यज ओड्डो — प्रतीच्छध्व-मिति सव्वा सूरा — सर्वे शूरा जपता — जल्पति यत्र सग्रामे इति शेष यथायथ योजनीय ॥ सारगिका निवृत्ता । (F)

१५७ । यथा । मत्ता योधा वृद्धकोपा अहमहमिकया गर्विता रोषारक्तसर्वगात्रा शल्यानि भल्लास्त्रोत्थिता । हस्तियूथानि सज्जी-भूतानि पादैर्भूमि कम्पते, गृहाण देहि त्यज प्रतीच्छध्व सर्वे शूरा जल्पति इति यत्रेति शेष ॥ (G)

१५८ । चामरस्य विशतिर्मात्रा त्रिमात्राग्रा, अष्टौ हारा सप्त शरा स्थाने स्थाने निर्मला । आदावन्ते हार शर कामिनि ज्ञाय-ताम् अक्षराणि दश पच पिङ्गलेन भण्यते ॥ त्रिमात्राग्रास्त्रिमात्रा-धिका, हारा गुरव, शरा लघव, आदावन्त इति यथासख्यमिति । (C)

१५८ । १ वामरस्स (A) २ वीह (A) ३ तिण्णि (A) ४ अह (B & C) ५ हाव (L & C) ६ साव (B & C) ७ मुणिज्जर (A) ८ १५४ (A)

जहा, झत्ति जोह[1] सज्ज होइ गज्ज बज्ज तं खणा
रोस रत्त सब्ब गत्त हक्क दिज्ज[2] भीसणा।
धाइ आइ खग्ग पाइ दाणवा चलंतआ[3]
बीर पाअ णाअराअ[4] कंप भूतलंतगा[5] ॥ १५९[6] ॥
चामरं।

१५८। अथ पञ्चदशाक्षरचरणस्य वृत्तस्यैक[स्य त्रयो]विंशत्युत्तर-नवशताधिकदशसहस्रतम [१०९२३] भेदं चामरनामकं वृत्तं लक्षयति, चामरस्सेति। हे कामिनि ठाइ ठाइ — स्थाने स्थाने अन्तरेति यावत् णिम्मला — निर्मला अट्ठ हार — अष्टौ हारा गुरवः सत्त सा[र] — सप्त सारा लघवः, एवंप्रकारेण दहाइ पंच — दशपञ्च पञ्चदशेत्यर्थः अक्खरा — अक्षराणि तीणि मत्त अग्गला — त्रिमात्राधिका बीस मत्त — विंशतिर्मात्राः चामरस्स — चामरस्य चामराख्यवृत्तस्येति यावत् पादे पततीति शेषः, आइ अंत — आद्यन्तयोः पादाद्यन्तयो-रित्यर्थः हारो गुरुः सार श्रेष्ठः मुणिज्जए — मन्यते, पादादौ अन्ते च गुरुर्देय इति भावः, इति पिंगले भणिज्जए — पिंगलेन भण्यते ॥ अयमाशयः — प्रथमं गुरुस्तदनंतरं लघुः पुनः गुरुः पुनस्तदनंतरं लघुरेवंप्रकारेण पञ्चदशा[क्षरा]णि कर्त्तव्यानि, तथाच रगण-जगण-रगण-जगण-रगण-रचितचरणं चामरमिति फलितार्थः। (L)

१५८। चामरेति। चामरस्य विंशतिर्मात्रा त्रिमात्राधिका

१५९। १ जोध (C) २ दिज्जु (A) ३ चलन्तओ (A, B & C) ४ राअ (B) पाअ (F) ५ भूतल तओ (A B & C) ६ १५५ (A)

हारु[1] धरु[2] तिण्णि[3] सरु[4] हित्थि[5] परि तिग्गणा
पंच गुरु दुस लहु अंत कर[6] रग्गणा ।
एत्थ[7] सहि चंदमुहि बीस लहु[8] आणआ[9]
कव्वबर[10] सप्प भण छंद णिसिपालआ ॥१६०[11]॥

अष्टौ हारा सप्त सारा स्थाने स्थाने निर्मला । आदावते हार सार कामिनि ज्ञायते अचराणि दशपच पिंगलेन भण्यते ॥ चामरेति छद, कामिनीति सबुद्धि, हारो गुरु, सारो लघु । (G)

१५९ । उदाहरति । झटिति योधा सज्जीभवन्ति गजो-बध्यते ततच्चणात्, रोषरक्त सर्व्वगात्र घोषणा दीयते भीषणा । धाविलागत्य खड्गपाणयो दानवास्वलन्ति वीरपदैर्नागराज कम्पते भूस्खलति ॥ हक्कशब्द उच्चैर्घुष्टवाची देशी । (C)

१५९ । चामरमुदाहरति, झत्तीति । त खणा — त[त]च्चणे वज्ज — वाद्यानि डिण्डिमप्रभृतीनि गज्ज — गर्ज्जति, * * * हक्क — हक्का सिंहनादमिति यावत दिज्ज — ददति, चलतओ — चलति च, बीर पाअ — वीरपादै भूतलतगा — भूतलातर्गत णाअराअ — नागराज शेष कप — कपतेऽत हे जोह — हे योधा झत्ति — झटिति सज्ज — सज्जिता कृतसन्नाहा इत्यर्थ होह — भवत ॥

१६० । १ हार (A, B & C) २ धर (A) कर (B & C) ३ तिण (C) ४ सर (A) ५ ठप्प (A) एम (B & C) ६ कर (A, B & C) ७ एक (A) ८ Dropt in (A) ९ मलआ (A) माणआ (B) १ कव्वमण (A & C) dropt up to छंद inclusive in (B) ११ १५९ (A)

दैत्यसेनाजयाय प्रस्थितस्य शक्रस्य देवान् प्रति वाक्यमेतत् । चामर निवृत्तम । (F)

१५९ । यथा । झटिति योधा सज्जीभवत गर्जति वाद्यानि लक्षणे रोषरक्तसर्वगाचा हक्का दीयते भीषणा । धावित्वागत्य खड्गपातैर्दानवाः स्खलति वीरपादैर्नागराज कम्पते भूतलातर्गत ॥ हक्केति शब्दविशेषे देशी । (ᑌ)

१६० । हार स्थाप्यता त्रय शरा एवप्रकारेण त्रयो गणा पच गुरव * * अन्ते क्रियता रगण । अत्र सखि चन्द्रमुखि विशतिर्लघव आनीता काव्यमना सर्पो भणति छन्दो निशिपालक । पादे पञ्च गुरव तद्द्विगुणा दश लघव, पञ्चगुर्वादिक कथ स्यादत्र उक्त रगण इति । विशतिर्लघव इत्यत्र लघुशब्दो-मात्रावाची, काव्ये मनो यस्य स काव्यमना, सर्प पिङ्गल । (O)

१६० । अथ पचदशाचरचरणस्य [वृत्तस्य] पचदशोत्तरनवशताधिकैकादश [पचदशोत्तरद्वादश] [१२०१५] सहस्रतम भेद निशिपालनामक वृत्त लक्षयति, हार्विति । हारु—हार गुरुरित्यर्थ तिणि सरु—त्रय शरा लघव इत्यर्थ ठिविथ परि—अनया परिपाट्या तिग्गणा—त्रिगणान् धरु—स्थापय त्रीन् गुर्वादीन् पचकलान् गणान् स्थापयेत्यर्थ, [अ]ते गणत्रयाते रग्गणा—रगण मध्यलघु गणमित्यर्थ करु—कुरु, एवप्रकारेण यत्र पदे इति शेष पच गुरु—पच गुरव दुण लहु—द्विगुणिता लघव पच द्विगुणिता दश लघव इति भाव बीस लहु—विशतिर्लघव मात्रा इति यावत् आणिआ—आनीता आनीयते वा, हे चदमुहि सहि—

जहा, जुभ्भ[1] भट[2] भूमि पँउ[3] उठ्ठि पुणु[4] लग्गिआ
सग्ग मण खग्ग हण कोइ[5] णहि भग्गिआ।
बीस सर[6] तिक्ख कर[7] कस्स गुण अप्पिआ[8]
पत्थ तह जोलि[9] दह चाउ सह[10] कप्पिआ[11] ॥
१६१[12] ॥ निशिपालः[13]।

---

हे चन्द्रमुखि सखि एत्थ — एतत् णिसिपालआ — निशिपालक छन्द इति कव्ववर — काव्यवर काव्ये लोकोत्तरवर्णनानिपुणे कविकर्मणि वर श्रेष्ठ इत्यर्थ सप्प — सर्प पिगल भण — भणति ॥ अत्र पृथक्तया गुरुलघुकथन मात्राकथन च पद्यपूरणाय। भगण-जगण-सगण-नगण-रगण-रचितचरण निशिपालनामक वृत्तमिति फलितार्थ इति ध्येय। (E)

१६०। हारिविति। हार स्थाप्यस्तयो लघव एवप्रकारेण त्रिगणा पञ्चगुरवो द्विगुणा लघव अन्ते कुरु रगण। एव सखि चन्द्रमुखि विंशतिर्लघव आनीयते काव्यवर सर्पो भणति निशिपालकम ॥ हारो गुरु, विंशतिर्लघव इति अत्र लघुशब्दो मात्रावाची। (G)

१६१। उदाहरति। युद्धे भटा भूमौ पतिता पुनरुत्थाय लग्ना स्वर्गमनस खड्गेन हता क्रोध नहि भग्न विंशतिशरास्तीक्ष्णीकृता

---

१६१। १ जुवझ (B & C) २ भल (A & C) भग (B) ३ पल (A, B & C) ४ पुणु उठि (A) पुणि उठि (B & C) ५ Dropt up to the end of the ślokam (P) कोहि (C) ६ सब (A) ७ फब (A), पल (C) ८ थप्पिआ (A & C) ९ जोलु (A), जोध (C) १० ठाव सब (A) चार सह (C), चाउ सबह (E) ११ कपिआ (A & C) १२ १५७ (A) १३ विसिपाल (C)

जहि[1] आइ[2] हत्थ[3] णरेंद[4] बिण्णवि[5] दिज्जिआ[6]
गुरु एक काहल बेबि अंतह[7] किज्जिआ[8] ।
गुरु गाइ[9] गंध अ हार अंतहि[10] थप्पिआ
मणहंस छंद[11] पसिद्ध पिंगल जंपिआ[12] ॥ १६२[13] ॥

कर्णेन गुणे स्थापिता, पार्थेन तथा योजयित्वा दग्ध चापेन सह कर्त्तिता ॥ खड्गेन कियन्तो हता, पार्थेन अर्जुनेन योजयित्वा धनुषि शरान् कर्णस्य चापेन सह विंशतिशरा कर्त्तिता इत्यर्थ । (C)

१६१ । निशिपालमुदाहरति, जुज्झेति । जुज्झ — युद्धे भूमि — भूमौ पड — पतिता पुणु — पुन उट्ठि — उत्थाय लग्गिआ — लग्ना युद्धायेति भाव, सग्ग मण — स्वर्गमनस भट — भटा खग्ग हण — खड्गेन ह[न्य]ति, तथापि कोइ णहि — कोऽपि नहि भग्गिआ — भग्न । तिक्ख — तीक्ष्ण बीस — विंशति सर — शरा कण्ण — कर्णेन गुण अप्पिआ — गुणार्पिता प्रत्यचा[पतञ्चिका]युक्ता इति यावत् कर — कृता तह — तथा पत्थ — पार्थेन दह — दग्ध वाणान् इति शेष जोलि — योजयित्वा चाउ सह — चापेन सह कप्पिआ — कर्त्तिता, कर्णवाणा इति भाव ॥ निशिपालो निवृत्त । (E)

१६१ । यथा । युद्धे भटा भूमौ पतिता उत्थाय पुनर्लग्ना

१६२ । १ जहि (A), drop from the beginning up to ण of णरेंद in (B), जइ (C) २ आदि (F) ३ हत्थ (A) ४ णरिंद (E) ५ विण्णिवि (F) ६ दिज्जिए (E), दिज्जए (F) ७ तक्कइ (A, B & C), अंतहि (E) ८ किज्जिए (E & F) ९ ठाइ (A B & C) १० अंतह (A) ११ छन्द (C) १२ जप्पिआ (B) १३ १५८ (A)

स्वर्गमनस खड्गेन प्रति कोऽपि नहि भग्न। विंशतिशरास्तीच्णा कृता कर्णेन गुणार्पिता, पार्थेन तथा योजयित्वा दश चापेन सह कर्त्तिता॥ (G)

१६२। यत्रादौ हस्तो नरेन्द्रौ द्वावपि दत्तो गुरुरेक काहलौ द्वौ तदन्ते कृतौ। गुरु स्थापयित्वा गन्धहारावन्ते स्थापितौ मनोहसच्छन्द प्रसिद्ध पिङ्गलेन कथित॥ हस्तोऽन्तगुरुश्चतुष्कल, नरेन्द्रो मध्यगुरुश्चतुष्कल, काहलो गन्धश्च लघु, हारो गुरु। तन्मनोहसच्छन्द। (C)

१६२। अथ पञ्चदशाक्षरचरणस्य [अष्टा]विंशत्युत्तरषट्शताधिकैकादशसहस्रतम [११६२८] भेद मनोहसनामक वृत्त लक्षयति, जहीति। जहि आइ हत्थ—यत्र आदौ हस्त गुर्वंत सगण इत्यर्थ णरिंद बिण्णि—नरेन्द्रद्वयमपि मध्यगुरुजगणद्वयमपीत्यर्थ दिज्जिए—दीयते अतहि—अते जगणद्वयाते इति यावत् एक्क गुरु—एको गुरु काहल बेबि—काहलद्वयमपि, काहलो लघुस्तद्वयमपीत्यर्थ, किज्जिए—क्रियते। अतहि—अते लघुद्वयाते इत्यर्थ गुरु गाइ—गुरुमुच्चार्य्य गध अ हार—गध लघुश्च पुन हारो गुरु थप्पिआ—स्थापित, तत पिगल जपिआ—पिगलजल्पित पसिद्ध—प्रसिद्ध मणहस छद—मनोहस[च्छन्द]॥ (E)

१६२। जहीति। यत्रादौ हस्तो नरेद्रद्वयमपि दीयते गुरुरेक काहलौ द्वौ अते क्रियेते। गुरुमुच्चार्य गधस्य हारोऽते स्थाप्यते मनोहसच्छद प्रसिद्ध पिगलजल्पित॥ हस्त सगणो, नरेद्रो जगणस्तद्वय, काहलो लघु, गधस्य लघु। (G)

जहा, जहि[1] फुल्ल केसु[2] असोअ चंपअ मंजुला[3]
सहआर[4] केसर गंध लुद्धउ[5] भम्मरा ।
बहु[6] दक्ख दक्खिण बाउ[7] माणह भंजणा
महुमास आविअ[8] लोअ लोअण[9] रंजणा ॥

१६३[10] ॥ मणोहंस[11] ।

---

१६२ । उदाहरति । सखि फुल्लानि किंशुकाशोकचम्पकानि मञ्जुला[नि] सहकारकेशरगन्धलुब्धा भ्रमरा । वहति [दक्ष]दक्षिण-वातो मानभञ्जन मधुमास आगतो लोकलोचनरञ्जन ॥ मञ्जु-ला[नि] सुन्दरा[णि], बञ्जुला इति पाठे श्वेतरक्तभेदात् वञ्जुला-शोकयोरुपादान । (C)

१६२ । मनोहसमुदाहरति, जहीति । जहि—यत्र मजुला—[मञ्जुला]नि केसु असोअ चपअ—किंशुकाशोकचपकानि फुल्ल—पुष्पितानि, भम्मरा—भ्रमरा सहकारकेशरगधलुब्धा जाता इति शेष । माणह भजणा—मानस्य भजन अतएव दक्ख—दक्ष मानिनीमानभजने इति भाव दक्खिण बाउ—दक्षिणवात बहु—वहति, स लोअ लोअण रजणा—लोकलोचनरजनो महुमा[स]—मधुमास वसतसबधी मास इत्यर्थ आविअ—आगत ॥ मनो-हसो निवृत्त । (E)

---

१६२ । १ सहि (B & C) २ किसु (E) ३ बजुला (A, B & C) ४ सह कार (F) ५ लुद्धउ (B) ६ वह (A, B & C) ७ बाअ (B & C) ८ आइअ (A), आविआ (E) ९ लोचण (A) १० १५९ (A) ११ मनोहस (A)

पढम रस सहित्तं[१] मालिणी णाम बुत्तं[२]
चमर[३] तिअ पसिद्धं[४] बीअ ठाणे[५] णिबद्धं[६] ।
सर गुरुजुअ गंधं[७] अंत कण्णा[८] सुबद्धं[९]
भणइ[१०] सरस छंदं[११] चित्त मज्झे[१२] णिहित्तं[१३] ॥ १६४[१४] ॥

---

१६३ । यथा । यत्र फुल्ला किंशुकाशोकचंपकवंजुला सहकार-केसरगंधलुब्धा भ्रमरा । वहति दक्षो दक्षिणवायुर्मानस्य भंजनो- मधुमास आगतो लोकलोचनरंजन ॥ (G)

१६४ । प्रथम रससहित मालिनीनाम वृत्त चामरत्रय प्रसिद्ध द्वितीयस्थाने निबद्ध। शरो गुरुयुग गन्ध अन्ते कर्णेन विशुद्ध भणति सरसकाव्य चित्तमध्ये निबद्ध ॥ रसो [?] लघुस्तत्षट्कयुक्त-मित्यर्थ, कर्णो द्विगुरु । इय नान्दीमुखीति भरत । (C)

१६४ । अथ पंचदशाक्षरचरणस्य वृत्तस्य द्विसप्तत्युत्तरषट्शता-धिकचतुःसहस्रतम [४६७२] भेद मालिनीनाम वृत्त लक्षयति, पढमेति । यत् पढम—प्रथम रस सहित्त—रससहित रसाभ्या सहितमित्यर्थ, "भाव रस ताडवत्र णारी अह कुल भामिणित्र । तिलअ अणस्स कइअरो इअ णाम पिंगलो भणइ ॥" इति पूर्व [Vide श्लोक ९०, p 28 — Ed ] रसपदस्य चिलघुनामसूपात्तत्वाद्रस-

---

१६४ । १ सहित (F) २ विन्त (B & C), वृत्त (E) ३ चर (B) चरम (E) ४ and ६ transposed in (F & F) ५ ठये (B) ६ चित्त (A) ७ गधा (B & C) ८ पाता (B) ९ सुसिद्ध (A) णिबद्ध (E), सिबद्ध (F) १० भणसि (B & C) ११ कव्वो (E & F) १२ सठे (A), dropt in (B), मझे (C), मज्झे (F) १३ णिबद्ध (A & C), dropt in (B) १४ १९० (A)

जहा, वहइ मलअ बाआ हंत कंपंत[1] काआ
हणइ[2] सवण[3] रंधा[4] कोइला लाव[5] बंधा।
सुणिअ[6] दह[7] दिहासुं[8] भिंग झंकार भारा
हणिअ[9] हणइ हंजे[10] चंड[11] चंडाल मारा॥
१६५[12]॥ मालिनी।

शब्दस्त्रिलघुकगणवाची, बीअ ठाणे—द्वितीयस्थाने चरमे[चमर] तिअ णिबद्ध—चमरत्रयनिबद्ध, चमरो गुरुस्तत्त्रयेण मगणेनेति यावत् निबद्ध यत्र चेति शेष, अत—अते मगणाते इत्यर्थ सर—शर लघु गुरुजुअ—गुरुयुग गध—गधो लघु कण्ण—कर्ण द्विगुरुको गण णिबद्ध—निबद्ध तत् चित्त मज्झे णिहित्त—चित्तमध्ये निहित पसिद्ध—प्रसिद्ध मालिणी णाम वुत्त—मालिनी-नाम वृत्त ज्ञातव्यमिति शेष, इति सरस कव्वो—सरसकाव्य सरस काव्य यस्य स तादृश पिगल इत्यर्थ भणइ—भणति॥ (E)

१६४। पढमेति। प्रथम रससहित मालिनीनाम वृत्त चमर-त्रयनिबद्ध द्वितीयस्थाने प्रसिद्ध। शरो गुरुयुग गधोऽते कर्णनिबद्ध भणति सरसकाव्यश्चित्तमध्ये निहित॥ रसाभ्या सहित रसद्वययुक्त-मित्यर्थ, रसो नगण, चमर गुरु, शरगधौ लघू, कर्णो द्विगुरु॥ (G)

१६५। १ कपति (A, B & C) २ लहइ (B) ३ सरस (A) ४ बधा (A) ५ लाप (B & C) ६ सुणिच (E) ७ दस (B & C) ८ दिहाच (A), दिसाण (B & C) ९ हणइ (A, B & C) १० हते (A), हञ्ज (B) ११ हत (A) १२ १६१ (A)

भणिअ सुपिअ[1] गण सर लहु[2] सहिओ
तह[3] दिअबर जुअ करअल[4] लहिओ ।
चउ चउकल गण पअ पअ[5] मुणिओ[6]
सरह[7] सुपिअ कह[8] फणिवइ भणिओ ॥ १६६[9] ॥

१६५। वहति मलयवातो हन्त कम्पते काय घ्नन्ति श्रवणरन्ध्र कोकिलालापबन्धा । श्रूयते दशदिक्षु भृङ्गझङ्कारभार हन्ति हन्ति हञ्जे चण्डचण्डालमार ॥ बन्धा प्रबन्धा, हञ्जे इति चेटीसम्बोधन, मार काम । विरहिण्युक्तिरियम् । (C)

१६५। मालिनीमुदाहरति, वहईति । हे हजे—चेटिके मलअ बाआ—मलयवात वहइ—[वह]ति, हत इति खेदे, काआ—काय कपत—कपते, कोइला लाव बधा—कोकिलालापबध सवण रधा—श्रवणरध्र हणइ[—ह]ति । भिग झकार भारा—भृगझकारसमूहा दह दिहासु—दशदिक्षु सुणिअ—श्रूयते, चड चडाल मारा—चण्ड चण्डालमार चण्डो महाक्रोधी चण्डाल-इव चण्डालस्तद्वन्निष्ठुर मार काम हणिअ—हत मलचण जन हणइ—हति ॥ मलयवातादिभिर्हता मा यद्य कामो हति कोऽयमस्य पुरुषार्थ, मत्प्रिय हला मद्दश यदि नयति तदैन परम-

१६६। १ अपिअ (A) सुपिअ (E) २ पञ्च गण (A), रस गण (B) ३ जह (E & F) ४ विऊ करअल पअ पअ (A & B) विअ करअल पअ पअ (C) ५ तल (A) ६ सुणिओ (A) ७ सरस (B) ८ गण (A, B & C) ९ १९२ (A)

पुरुषार्थिन मन्ये इति गूढाभिप्रायाया कस्याश्चिद्वाक्यमेतत्।
मालिनी निवृत्ता। (E)

१६५। यथा। वहति मलयवातो हन्त कम्पते काय इति श्रवणरन्ध्राणि कोकिलालापबन्ध। श्रूयते दशदिक्षु भृगझङ्कारभारा हला इति हजे चण्ड चण्डालो मार॥ पुन पुनर्हन्तीत्यर्थ, हजे चेटिके इति सम्बुद्धि। (G)

१६६। भणित सुप्रियगण सर्व्वल[घु]सहित तत्रापि च करतल पादे पादे लभ्य। चतुश्चतुष्कलो गण पदतले ज्ञात शरभ सुप्रिय ज्ञायता फणिपतिभणित॥ सुप्रियो द्विलघु, तत पञ्च लघव तत्रापि पञ्च लघव, करतलमन्तलघु[गुरु]श्चतुष्कल, सुप्रियेति सम्बोधन। (C)

१६६। अथ पञ्चदशाक्षरचरणस्य वृत्तस्य चतुरशीत्युत्तरद्वि[त्रि]-शताधिकषोडशसहस्रतम [१६३८४] भेद सरभनामक वृत्त लक्षयति, भणिअ इति। यत्रादौ सर लहु सहिओ—सरलघुसहित सर—सर एकलघ्वात्मको गण अथच लघुस्ताभ्या युक्तमित्यर्थ' सू[सु]पिअ गण सुप्रियगण सुप्रियो द्विलघ्वात्मको गणस्तमित्यर्थ' भणिअ—भणित्वा, दिअवर जुअ [करअ]ल—द्विजवरयुग-करतलौ द्विजवरश्चतुर्लघ्वात्मको गणस्तद्युग करतलो गुर्वन्तसगणस्तावित्यर्थ लहिओ—लब्धौ, एवप्रकारेणेति शेष जह—यत्र चउ चउकल गण—चत्वारश्चतु कला गणा पअ पअ—पादे पादे प्रतिपाद-मिति यावत् मुणिओ—ज्ञाता हे सुपिअ—सुप्रिय शिष्य तत् फणिवइ भणिओ—फणिपतिभणित सरभ—सरभ कह—कथय

जहा, तरल कमलदल सरि जुअ णअणा
सरअ समअ ससि सुसरिस[१] बअणा[२] ।
मअ गल[३] करिबर सअलस गमणी
कमण सुकिअ[४] फल बिहि[५] गठ[६] रमणी ॥
. १६७[७] ॥ सरभ[८] ।

---

सरभनामक तद्वृत्तमित्यर्थ ॥ अत्र पुनश्चतुष्कलचतुष्टयकथन पद्यपूरणार्थमेव, नगणचतुष्टयोत्तरसगणरचितचरण सरभनामक वृत्तमिति फलितार्थ इति ध्येयम् । (E)

१६६ । भणीति । भणिता सुप्रियगण शरलघुसहित यत्र द्विजवरयुग करतलसहित । चत्वारश्चतुष्कला गणा पदे पदे ज्ञातव्या, शरभ सुप्रिये कथय फणिपतिभणित ॥ शरो लघु ताभ्या सहित, सुप्रियो द्विलघु, द्विजवरश्चतुर्लघु, करतल सगण । (G)

१६७ । उदाहरति । तरलकमलदलसदृशनयनयुगा शरत्समयशशिसुसदृशवदना । मदकलकरिवरालसगमना केन सुकृतफलेन विधात्रा घटिता रमणी ॥ (C)

१६७ । सरभमुदाहरति, तरलेति । तरल कमलदल सरि जुअ णअणा — तरलकमलदलसदृशनयनयुगा, सरअ समअ ससि सू[सु]सरिसबअणा — शरत्समयशशिसुसदृशवदना । मअ गल करिबर

---

१६७ । १ सूसरिस (E) २ विअणा (B) ३ गअ (A) गण (B), कल (F) ४ सुकिअ (E) ५ विह (A & B) ६ गढु (A, B & C) ७ १६२ (A) ८ शरभ (C)

णरेंद[1] जत्थ[2] सव्वलो सुपस्स चक्क दीसए
पइक्क[3] ठाम पंचमे पआ चऊ सवीसए[4]।
पलंत[5] हार[6] चारु सारु[7] अंत जस्स वट्टए[8]
पसिद्ध ए णराउ[9] जंप गंध बंधु[10] अट्ठए[11]॥ १९८[12]॥

---

सअलस गमणी—मदकलकरिवरसालसगमना एतादृशी रमणी कमण सू[सु]किअ फल—केन सुकृतफलेन विहि—विधिना स्रष्टेति यावत् गठ—निर्मिता॥ सरभो निवृत्त। (E)

१९७। यथा। तरलकमलदलसदृशयुगनयना शरत्समयशशि-सुसदृशवदना। मदकलकरिवरसालसगमना केन सुकृतफलेन विधिना निर्मिता रमणी॥ (G)

१९८। अथ षोडशाक्षरा। नरेन्द्रो यत्र सबल सुपर्णश्चक्र दृश्यते पदातिक स्थाने पञ्चमे पदे चतुर्विंशति। पतनहारश्चारु सार अन्ते यस्य वर्त्तते * * नाराचो जल्प्यता गन्धा बध्यन्तेऽष्टौ॥ प्राथमिकत्वात् सबलो नरेन्द्रो जगण, सुपर्णो रगण, चक्रमित्यनेनाप्येतद्गणद्वय लभ्यते, पदातिको जगण, पादे चतुर्विंशतिर्मात्रा भवन्ति, यस्यान्ते पतनहारो दृश्यते तत्र गन्धा लघवोऽष्टौ निब-

---

१९८। १ णरिंद (E & F) २ जच्छ (A) ३ ठइक्क (B) ४ चऊ वीसए (C), चउ सवीसए (E & F) ५ पलंति (A) ६ हाव (A & C) ७ सार (E & F) ८ वढए (A), वट्टए (C) ९ णराच (B), णराचु (C) णर ज (E) १० बट्ट (B), बद्ध (C), बक्क (E) ११ अट्ठए (B) १२ १९४ (A)

ध्यन्तेऽर्थाद्गुरवोऽष्टौ । यद्य[प्य]ष्टाक्षरप्रकरणे पमाणि हूण किज्जए इत्युक्त [Vide श्लोक ६८ p 380] तथापि प्रकरणानुरोधात् तदनुवाद कृत इति मन्तव्यम् । (C)

१६८ । अथ षोडशाक्षरचरणस्य वृत्तस्य षट्त्रिंशदुत्तरपञ्चशता-धिकपञ्चषष्टिसहस्र [६५५३६] भेदा भवति, तत्र षट्चत्वारिंशोत्त-रा[ष्टशता]धिकैकविंशतिसहस्रतम [२१८४६] भेद नाराचनामक वृत्त लक्षयति, णरिंदेति । जत्थ — यत्र सव्वलो — सबल णरिंद — नरेंद्र मध्यगुरुर्जगण इति यावत् सुपण्ण चक्क — सुपर्णचक्रम् अत — अते पादान्ते चारु सुदर सार पादपूरकत्वात् श्रेष्ठ इति हार — हार गुरु वट्टए — वर्त्तते, यत्र च पआ — पादे चउवीसए — चतुर्विंशति मात्रा इति शेष, * * * मध्यलघुरगणश्चेति यावत् दीसए — दृश्यते पचमे ठाम — पचमे स्थाने पइक्क — पदाति मध्यगुरुर्जगण इति यावत् दृश्यते इति पूर्वेणान्वय, जस्स — यस्य अट्ठए — अष्टौ गध — गधा लघव इति यावत् बक — वक्रा गुरवश्चेत्यर्थ पलत — पतति, पसिद्ध — प्रसिद्ध ए — एष णराउ — नाराच जप — जल्पत ॥ इहाप्यत्र तत्त्व — पचमस्थाने पदातिर्दृश्यत इत्युक्त्या तृतीयचतुर्थस्थाने पुनरपि जगणरगणावेव देयाविति लभ्यते, अन्यथा प्रथमद्वितीय-स्थाने जगणरगणयो पचमस्थाने पदातेरेवदानस्योक्तत्वात् तृतीय-चतुर्थस्थाने को गणो देय इत्याकाक्षाया अनिवृत्त्यापत्ति, तथाच जगण-रगण-जगण-रगण-जगण-गुरुरचितचरण नाराच इति फलि-तार्थ । यद्यपि अष्टोत्तर[ष्टाक्षर]प्रस्तारे पमाणि इत्यनेन प्रागेवै-तल्लक्षित, तथापि प्रकरणानुरोधात्तस्यैव पुनरनुवाद कृत इत्यस्म-

जहा, चलंत[1] जोह मत्त[2] कोह[3] रण[4] कम्म अग्गरा
किवाण बाण सल्ल[5] भल्ल[6] चाव[7] चक्क मुग्गरा[8] ।
पहार बार[9] धीर[10] बीर[11] बग्ग[12] मज्झ[13] पंडिआ
पअट्ठ[14] ओट्ठ[15] कंत दंत[16] तेण सेण मंडिआ[17] ॥
१६९[18] ॥ णराच[19] ।

---

त्तातचरणोपदेशसरणि । अत्र मात्राकथन पृथक्[या] गुरुलघुकथन च पद्यपूरणार्थमिति ध्येयम् । (E)

१६८। अथ षोडशाक्षराष्टौ ॥ णरिंदेति। नरेन्द्रो यत्र सबल सुपर्णचक्र दृश्यते, पदाति स्थाने पञ्चमे, पादे चतुर्विंशतिर्मात्रा-इत्यर्थः । प्रकटो हारस्तारु सारोऽते यस्य वर्त्तते प्रसिद्ध तन्नाराच जल्पति गधा वक्रा अष्टौ ॥ नरेन्द्रो जगण, सुपर्णो रगण, पदाति-र्जगण । पञ्चमे स्थाने इत्युक्त्या तृतीयचतुर्थस्थाने जगणरगणावेव पुनर्देयौ इति सूच्यते । गधा लघवो वक्रा गुरव । (G)

१६९। उदाहरति। चलन्ति योधा शत्रून् क्षोभयन्त वर्म्मकर्म्मण्युग्रा, कृपाणबाणचापशल्यभल्लमुद्गरै । प्रहारवारिवधा रणे

---

१६९। १ चलति (B) २ मत्तु (A B & C) ३ खोह (A B & C) ४ वम्म (A, B & C) ५ सेल्ल (A, B & C) ६ भेल्ल (B & C) ७ चाप (A) ८ मूग्गरा (B) ९ धार (A), वारि (B & C) १० वार (A), मार (B) धार (C) ११ मार (A), धारि (B), धीरि (C) १२ रग्ग (A) १३ वग्ग (A, B & C), मज्झ (F) १४ पउठठ (A), पओट्ठ (B), पअट्ठ (C), पदठठ (F) १५ उठठ (A) १६ दत्त दन्त (A) दन्त कन्त (B) १७ सुपिड्आ (B), खपिड्आ (C) १८ १६४ (A) १९ नाराच (A)

लील बिसेस[1] बिआणहु[2] मत्तह[3] बाइसही[4]
पंचउ भग्गण[5] पाअ[6] पआसिअ एरिसही ।
अंत ठिआ जहि[7] हार मुणिज्जइ हे रमणी
बाबण[8] अग्गल तिण्णि सआ धुअ[9] मत्त मुणी[10] ॥ १७०[11] ॥

---

धीरा वर्ग्गे वर्ग्गे पण्डिता प्रदष्टे ओष्ठ दन्तान्तेन तेन सेना खण्डिता ॥ वर्ग्ग कवच, कृपाणादिभि शत्रून् चोभयन्त इत्यन्वय, बार बार इति पाठे पुन पुनरित्यर्थ । वर्गे वर्गे सेनाया सेनाया ते शत्रव केचिन्मुखेन खण्डिता । (C)

१६९ । नाराचमुदाहरति, चलतेति । किवाण वाण सल्ल भल्ल चाव चक्क मुग्गरा—कृपाणबाणशल्यभल्लचापचक्रमुद्गरै रण कम्म अग्गरा—रणकर्मण्यग्रा दचा इति यावत् मत्त कोह—क्रोधमत्ता पहार वार धीर—प्रहारवारणधीरा शत्रुकृतशस्त्रप्रहाररचणे कृतधैर्या इति यावत् बीर बग्ग मज्झ—वीरवर्गमध्ये पण्डिआ—पण्डिता कृतशस्त्रविद्याध्ययना इत्यर्थ पअट्ठ ओट्ठ कत दंत—प्रदष्टौष्ठकातदंता प्रदष्ट ओष्ठौ यैस्तादृशा काता दंता येषा ते तादृशा इत्यर्थ जोह—योद्धार चलति, तेन योधचलनेन सेण—सेना मण्डिआ—मण्डिता ॥ नाराचो निवृत्त । (F)

१६९ । यथा । चलति योधा मत्तकोपा रणकर्माधिका कृपाण-

---

१७० । १ लील विसेसे (B) णील सरुअ (E) णीलसरूअ (F) २ विआणह (E & F) ३ मत्तइ (B & C) ४ वेविसही॑ (A) वाइसहि (B) ५ गगण (C) ६ भाअ (B) ७ जह (A) जइ (C) ८ वामण (A), वाअण (B & C) ९ धुव (E & F) १० सुणी (A), कही (B & C) ११ १६६ (A)

बाणशल्यभल्लचापचक्रमुद्गरै । प्रहारवारणधीरा वीरवर्गमध्ये पण्डिता प्रदष्टौष्ठकातदृतास्तेन सेना मण्डिता ॥ (G)

१७० । लीले विशेषो ज्ञायतां मात्रा द्वाविंशति पञ्चभिर्भगणैः पादे प्रकाशितम एतादृश स्वरूपम् । अन्तस्थो यदि हारो जायते हे रमणि द्विपञ्चाशदग्राणि त्रीणि शतानि ध्रुव मात्रा भणन्ता ॥ लीले छन्दसि, लीला इत्यंन्ये, लीलाविलास इत्यन्ये । (C)

१७० । अथ षोडशाक्षरचरणवृत्तस्य सप्ताशीत्युत्तर-सप्तशताधिक-सप्तविंशति २७७८७ [अष्टाविंशति २८०८७] सहस्रतम भेद नील-नामक वृत्त लक्षयति, णीलेति । हे रमणि प्रिये जहि—यत्र येषा वा अत—अते हार—हारो गुरुरिति यावत् ठिआ—स्थित मुणिज्जइ—ज्ञायते एरिसही—एतादृशे पचउ भग्गण—पञ्चभगणैरादिगुरुकैर्गणैरिति यावत् पाउ[अ] पआसिअ—पादे प्रकाशित प्रकाशि[त]पाद वा, अवहट्टभाषाया पूर्वनिपातानियमात् बाइसही—द्वाविंशत्या मत्तह—मात्राभि उपलक्षित णील-सरूअ—नीलस्वरूप नीलनामकस्य छदस स्वरूपमिति यावत् बिआणह—विज्ञायताम्, अत्र च बावण अग्गल— द्विपञ्चाशदधि-कानि तिण्णि सआ—त्रीणि शतानि मत्त—मात्रा धुअ—ध्रुव निश्चितमित्यर्थ मुणी—ज्ञायता ॥ इद च चतुश्छद करणाभि-प्रायेणेति बोध्य । (E)

१७० । णीलेति । नीलस्वरूप विजानीत मात्रा द्वाविंशति पञ्च भगणा पादे प्रकाशिता एतादृशा अते स्थितो यत्र हारो-ज्ञायते हे रमणि द्विपञ्चाशदधिकानि त्रीणि शतानि ध्रुव मात्रा

जहा, सज्जिअ जोह विबट्ठिअ[1] कोह चलाउ[2] धणू[3]
पक्खर[4] बाह[5] चलू[6] रणणाह[7] फुरंत[8] तणू।
पत्ति चलंत[9] करे धरि कुंत सुखग्गकरा
कम्म[10] णरेंद सुसज्जिअ बिंद चलंति[11] धरा॥
१७१[12]॥ णील।

ज्ञायते॥ नीलनामच्छन्द, हारो गुरु, मात्रोक्ति षोडशचरणा-भिप्रायेण। (G)

१७१। उदाहरति। सज्जिता योधा विवर्द्धि[त]क्रोधाश्चालयन्तो-धनूंषि कवचवाहैश्चलितो नरनाथ स्फुरत्तनु। पत्तयश्चलन्ति करे धृत्वा कुन्तान् सुखड्गकरा कर्णनरेन्द्रे सुसज्जितवृन्दे चलति धरा॥ कवचयुक्ता वाहा अश्वा कवचवाहा, एवक्रमेण कर्णनरेन्द्रे चलति सति। (C)

१७१। नीलमुदाहरति, सज्जिअ इति। बिबट्ठिअ कोह—विवर्द्धितक्रोधा धणू—धनूंषि चलाउ—चालयत धनुर्भ्यो वाणान् क्षिपत इति भाव जोह—योधा सज्जिता कृतसन्नाहा जाता, फुरत तणू—स्फुरत्तनु रणणाह—रणनाथ सेनापतिरित्यर्थ पक्खर बाह—कवचिताश्वेन चलित, करे पाणौ कुतान् पाशान्

१७१। १ विवट्ठिअ (B & C) २ चलाइ (F) ३ धुणु (B) ४ पक्खर (A), पक्खरि (B & C) ५ धाव (A) ६ चल (E) ७ णरणाह (A, B & C) ८ पफुल्ल (B & C) ९ पलत (A) १० पुम्म (A) ११ चलत (E & F) १२ १६७ (A)

दिज्जिए[1] सुपस्र आइ एक्क तो पओहराइ[2]
हिस्सि[3] रूअ[4] पंच चक्क सव्वलो मणोहराइ।
अंत दिज्ज[5] गंध[6] बंधु[7] अक्खराइ सोलहाइ[8]
चंचला बिणिम्मिआ फणिंद एउ[9] बल्लहाइ[10] ॥१७२[11]॥

---

धरि—धृत्वा सुखग्गकरा—सत्सरुकरा पत्ति—पत्तय चलत—चलिता, एवक्रमेण कस्स णरेंद—कर्णनरेन्द्रे सुसज्जितवृन्दे सति धरा पृथ्वी चलत—चलति॥ नीलो निवृत्त। (E)

१७१। यथा। सज्जिता योधा विवर्द्धितकोपाश्चालयतो धनूषि पखरवाहे चलन् रणनाथ स्फुरन्तु। पत्तयश्चलिता करे धृत्वा कुतान् सुखड्गकरा कर्णनरेन्द्रे सुसज्जितवृन्दे चलति धरा॥ (G)

१७२। दीयते सुपर्ण आदौ एकस्तत पयोधरो भवति एव रूपेण पञ्चचक्र सकल मनोहरम। अन्ते दीयते गन्धो बन्धु अक्षरै षोडशभिश्चञ्चला विनिर्म्मिता फणीन्द्रेण वल्लभा॥ सुपर्णो रगण, पयोधरो जगण, गन्धो लघु स एव बन्धु निर्व्वाहकलात्। (C)

१७२। अथ षोडशाक्षरचरणस्य वृत्तस्यैकनवत्युत्तरषट्शताधिक-त्रिचत्वारिंशतसहस्रतम ४३६९१ भेद चचलानामक वृत्त लक्षयति, दिज्जिए इति। यत्र आइ—आदौ सुपस्र—सुपर्ण मध्यलघु

---

१७२। १ दिज्जिआ (A, B & C) २ पओधराइ (B), पआहराहि (E) ३ कहेस (A), हेस (B & C) ४ रूप (B) ५ किज्ज (A) ६ गन्ध (B), गुध (F) ७ वध (A & B) ८ सोरहाइ (A) सोलहाइ (B & C) ९ एक्क (A) १० दुल्लहाइँ (A), दुल्लभाए (B) ११ १९८ (A)

जहा[१], कस्स पत्थ[२] ढुक्कु[३] लुक्कु[४] सूर बाण संहरण[५]
घाउ[६] जासु[७] तासु[८] लग्गु[९] अंधआर सहरण[१०] ।
एत्थ[११] पत्थ[१२] सट्ठि[१३] बाण कस्स[१४] पूरि[१५] छड्डरण[१६]
पेक्खि[१७] कस्स कित्ति धम्स बाण सब्ब कट्टिरण[१८] ॥
१७३[१९] ॥ चंचला[२०] ।

---

रगण इत्यर्थ दिज्जिए—दीयते तो—तत एक्क—एक पओहराइ—पयोधर मध्यगुरुर्जगण इति यावत् दीयते इत्यनेन पूर्वेणान्वय, हिस्सि रूअ—अनेन रूपेण मणोहराइ—मनोहराणि सब्बलो—सबलानि पच चक्क—चक्राणि गणा इत्यर्थ क्रियत-इति शेष । अत्र चक्रशब्दो गणवाची, तथाच रगण जगण-रगणा अनेन रूपेण पचगणा कर्त्तव्या इत्यर्थ । अत—अते पदाते गण-पचकाते वा बधु—बधु निर्वाहकलात गध लघुरिति यावत् दिज्ज—दीयते, यत्र च सोलहाइ अक्खराइ—षोडश अचराणि पादे पततीति शेष, फणिंद—फणीन्द्रेण पिगलेनेति यावत

---

१७३ । १ यथा (Γ) २ पच्छ (A) ३ ढुक (A), ढुकु (B) ४ णुक्क (B) ५ सघरण (A) ६ घाव (A) ७ जाऊ (A B & C) ८ ताऊ (A & B), diopt in (C & F) ९ लग्ग (A & F), लागु (B & C) १० ससरण (A B & C) ११ पच (A), एक (B) १२ पच्छ (A), पत्थि (F) १३ साठि (A & B), साठि (C), सठि (E) १४ काण (B & C) १५ पुरि (E) १६ छहरण (B & C) १७ पेक्ख (A) १८ कड्डरण (A), कठठिरण (F) १९ १९९ (A) २० पचला (C)

विणिम्मिआ — विनिर्मिता वल्लहाइ — वल्लभा पिंगलस्येति भाव, एउ — एषा चचला — तन्नचलानामक वृत्तमित्यर्थ ॥ (E)

१७२। दिज्जीति। दीयते सुपर्ण आदौ एकस्तत पयोधर एवरूपेण पञ्चचक्राणि सबलानि मनोहराणि। अते दीयते गधो-बधु सुदर अक्षराणि षोडश चचला विनिर्मिता फणीन्द्रेण वल्लभा ॥ सुपर्णो रगण, पयोधरो जगण, एवरूपेण रगण-जगण-रगण-जगण-रगणा इत्यर्थ, गधो लघु, चचलानामक छद । (G)

१७३। उदाहरति। कर्णपार्थाभ्या मिलित लुप्त शूराणा बाणसघैर्घाता जातास्तत्र लग्नमन्धकारसमयेन। अथ पार्थेन षष्टि-बाणान् कर्णपूरितान् दृष्ट्वा कर्णेन कीर्त्तिधन्येन बाणा सर्व्वे कृत्ता ॥ लुप्त लज्जया लग्नम, अत्रास्मिन् एव समये * * *। (C)

१७३। चचलामुदाहरति। कस पत्थ — कर्णपार्थौ राधेय-फाल्गुनाविति यावत् ढुक्कु — युद्धार्थं मिलितौ, बाण सहएण — बाणसघेन सूर — सूर्य लुक्कु — निलीन, जासु — यस्य घाउ — घात प्रहारनिपातजात इति शेष तासु — तस्य अधआर सहएण — अधकारसघेन लग्गु — लग्न यस्य घ्नत जात स अधकारजालप्रविष्ट-इव जात इति भाव, एत्थ — एतस्मिन्नवसरे इत्यर्थ कस पूरि — कर्ण पूरयित्वा आकर्णपर्यन्तमाकृष्येति यावत् पत्थ — पार्थेन छड्ड-एण — मुक्तान् सट्ठि बाण — षष्टिबाणान् पेक्खि — प्रेक्ष्य कित्ति धस — कीर्त्तिधनेन कस — कर्णेन सव्व बाण — सर्व्वे बाणा कट्टिएण — कर्त्तिता ॥ चचला निवृत्ता। (E)

१७३। यथा। कर्णपार्थौ मिलितौ निलीन सूर्य्यो बाणसघ-

जो लोआणं[१] बट्टे[२] बिंबुट्ठे[३] बिज्जुट्ठे[४] णास[५] ट्ठाणो[६]
सुज्जाणो[७] णाओ[८] छंदुट्ठावे[९] कण्णट्ठे हंसट्ठाणो[१०] ।
छंदु ग्गाअंतो[११] बुत्तो[१२] कंतो[१३] सव्वे सो[१४] सम्माणीओ
बह्माणं[१५] रूअं[१६] छंदो एसो लोआणं[१७] बक्खाणीओ[१८] ॥
१७४[१९] ॥

केन घातो येषु तेषु लग्नमधकारसघेन ॥ अत्र पार्थेन षष्टिर्बाणा कर्णोपरि त्यक्ता, तान् प्रेक्ष्य कर्णेन कीर्त्तिधनेन बाणा सर्वे कर्त्तिता ॥ (G)

१७४ । यो लोकानां वर्त्तते विम्बोष्ठे विद्युद्यष्टि इसस्येव स्थाने यस्य सज्ञो नाग कर्णमूलमुत्थापयति, कर्णा अष्टौ, सारलेन युक्त । छन्दो गायन् कान्तवृत्त सर्वैं समानित ब्रह्मरूपक छन्दएतल्लोकैर्व्याख्यात ॥ विद्युन्मालेवाङ्कं यस्य तद्विद्युन्मालाङ्कं [विद्युद्यष्टि], इसस्थानमित्यनेन इसवन्मन्थरगतित्व बोध्यते । कर्णा द्विगुरुगण, तैरष्टाभिरिद छन्दो लक्ष्यते, छन्द उत्थापयति सज्ञ नाग पिगल छन्दो गायन्, ब्रह्मणो रूपकमित्यनेन ब्रह्मरूपक नाम छन्दो लक्षणीय । (C)

१७४ । १ ड्डे आण (B) २ वट्टे (B & C) ३ विम्बुट्टे (B & C) ४ विजुट्टे (A), dropt in (B) ५ हस (A, B & C) ६ ट्ठाणो (B & C), ट्ठाणो (E) ७ सुज्जणो (C) ८ णाओ (A & C), dropt in (B) ९ कट्टुट्ठावे (A, B & C) १० सारत्ताणो (A & C), सावत्ताणो (B) ११ छट्टु माअंतो (E & F) १२ and १३ transposed in (B & C) १३ Dropt in (A & F) १४ सव्व सोत्तु (A), सव्व सोस (B & C) १५ बभाणो (A), वम्हाणो (B), बम्हाणो (C) वम्हाण (F) १६ रूओ (A, B & C) रूप (F) १७ लोआण (E) १८ बक्खाणिओ (E) १९ १७० (A)

जहा,

उम्मत्ता[1] जोहा उट्ठे[2] कोहा ओत्था[3] ओत्थी[4] जुज्झंता[5]
मेणक्का रंभा णाहं[6] दंभा अप्पा अप्पी बुज्झंता[7] ।
धावंता[8] सल्ला[9] छिण्णो[10] कंठा मत्था[11] पिट्ठी पेरंता[12]
णं सग्गा मग्गा जाए अग्गा लुद्धा[13] उद्धा हेरंता ॥
१७५[14] ॥ ब्रह्मरूपकं।

---

१७४ । अथ षोडशाक्षरचरणवृत्तस्य प्रथम भेद ब्रह्मरूपकनाम वृत्त लक्षयति, जो लोआणमिति । जो — यत् लोआण — लोकानां विबुद्धे — विबोद्धे बिज्जुट्ठे — विद्युत्स्थाने विद्युत्साम्यतया विद्युत्पदेन दृता लक्ष्यते, तथाच दतस्था[न] इत्यर्थ, णास ट्ठाणे — नासिका-स्थाने वट्टे — वर्त्तते, यच्च वुत्ते — वृत्त छद गग्गतो — छन्दो-गायद्भि सव्वे — सर्व्वै समाणीओ — समानित, सो — तत् कंतो — का'त हस ट्ठाणो — हसस्थान हसस्येव स्थान स्थितिर्गतिर्यस्य तत्ता-दृशमित्यर्थ बह्माण रूपक छदो — [ब्रह्मरूपक] छद कण्णट्ठे — कर्णाष्टकेन गुरुद्वयात्मकगणाष्टकेन सुज्जाणो णाओ — सुज्ञानो नाग पिगल उट्ठावे — उत्थापयति, एसो — तत छदो — छद

---

१७५ । १ उम्मत्ता (B) २ उठ (E) ३ ओच्छा (A) ओघा (F) ४ ओच्छी (A), ओत्थी (F) ५ जुझझता (A & E) ६ लाहे (A), णाहे (B & C) ७ बुझझता (A & E) dropt in (B) ८ भक्का (B) भक्क का (C) ९ सठा (A) १० विम्मे (A) छिन्ने (E) ११ मच्छा (A), मत्थ (E) १२ पाच्चता (A) १३ चन्धा (B), उद्धा (C) १४ १०१ (A)

लोत्राण—लोकाना निकटे मयेति शेष वक्खाणीत्रो—व्याख्यातम् ॥ अत्र षोडशगुरुरचितचरण ब्रह्मरूपकनामक वृत्तमिति फलितार्थ । (F)

१७४ । जो लो इति । यो लोकाना वर्त्तते विबोष्ठे विजुष्टे नाथास्थाने सुज्ञातो नाग छदोदर्शी कर्णाष्टकेन हसस्थाने । छदोगायद्भिर्वृत्त कात सर्वै तत्समानित ब्रह्मरूप छद एतत लोकाना व्याख्यात ॥ कर्णी द्विगुरु, हसस्थाने ह्रदि । (G)

१७५ । उदाहरति । उन्मत्ता योधा उत्थितकोपा उत्थायोत्थाय युद्धमाना मेनकारम्भानाथ दम्भादात्मान बुध्यमाना । धावन्त शस्त्रच्छिन्नकण्ठा मस्तक पृष्ठे प्रेरयन्तो नून स्वर्गमार्गं यातुमूर्द्धोर्द्ध पश्यति ॥ अह मेनकानाथ अह रम्भानाथ इत्येवमात्मान बुध्यमाना छिन्न यन्मस्तक तत पृष्ठे प्रेरयतो नून स्वर्गमार्गं यातुमये ऊर्द्धोर्द्ध पश्यन्ति इत्युत्प्रेक्षा । (C)

१७५ । ब्रह्मरूपकमुदाहरति, उम्मत्तेति । उठे कोहा—उत्थितक्रोधा उम्मत्ता—उन्मत्ता अप्पा अप्पो—आत्मानमात्मान परस्परमित्यर्थ मेणक्का रभा णाह—मेनकारभानाथ दभा—दभात् बुझ्झता—बुध्यमाना धावता सत्था छिन्ने[ऐ] कठा—धावन्त शस्त्रच्छिन्नकठा मत्था पिट्ठी पेरता—मस्तकानि पृष्ठे पातयन्त ओत्था ओत्थी—उत्थायोत्थाय जुझ्झता—युध्यमाना ण सग्गा मग्गा जाए—ननु निश्चयेनेत्यर्थ स्वर्गमार्गं गच्छत लुद्धा—लुब्धा मेनकादिप्राप्त्यर्थमिति भाव जोहा—योद्धार अग्गा—अग्रे उद्धा ऊर्द्ध हेरता—अन्विष्यति मेनकादिसुखमित्यर्थ ॥ (E)

पओहर मुह ट्ठिआ[1] तहअ[2] हत्थ[3] एक्को[4] दिआ
पुणोबि[5] तह[6] सठिआ[7] तहअ[8] गंध सज्जा[9] किआ[10] ।
पलंति[11] बलआ जुआ[12] बिमल सद्द हारा उणो
चउग्गलअ[13] बीसआ पुहबि णाम छंदो[14] मुणो[15] ॥
१७६[16] ॥

---

१७५। यथा। उन्मत्ता योधा उत्थितकोपा उत्थायोत्थाय युध्यतो[ध्यमाना] मेनकारभानायदभात् परस्पर बुध्यत [ध्यमाना] । धावन्त शस्त्रच्छिन्नकठा मस्तकानि पृष्ठे पातयतो नून स्वर्गमनसो-यातोऽग्रे लुब्धा ऊर्द्धमन्वेषयत ॥ (G)

१७६। अथ सप्तदशाक्षरा। पयोधरो मुखे स्थितस्तथाच हस्त-एक स्थित पुनरपि तथा सस्थितौ तथाच गन्ध सज्जीकृत । पतति वलययुग विमलशब्दहारौ पुनश्चतुरग्रविंशतिर्मात्रा पृथ्वीनाम छन्दो भणामि॥ मुखे आदौ, तत पतति वलययुग पादे चतु-र्विंशतिर्मात्रा भवन्ति यत्र तत। पयोधरो जगण, हस्तोऽन्तगुरु-चतुष्कल, गन्धो लघु, वलयो गुरु । (C)

---

१७६। १ ट्ठिआ (B & C) २ तहवि (A) ३ हत्थ (A) ४ एक्का (E & F) ५ पुणोपि (F) ६ त (F) ७ सट्ठिआ (B) सट्ठिआ (E) ८ तहवि (B & C) ९ एक्को (A), सेज्जो (B) सज्जे (C) १० दिआ (B & C) ११ वलत (A) १२ वलअज्जुआ (C) १३ चउकलअ (A) चउ कलअ (B) १४ छदा (B) च्छ (C) १५ भाणा (A) सुणी (B) भणी (C) १६ १७२ (A)

१७६ । अथ सप्तदशाक्षरचरणस्य वृत्तस्य द्विसप्तत्युत्तरैकत्रिंशत्सहस्रोत्तरैकलक्ष १३१०७२ भेदा भवति, तत्र पञ्चाशदधिकसप्तशताधिकषट्[अष्ट]त्रिंशत्सहस्रतम [३८७५०] भेद पृथ्वीनामक वृत्त लक्षयति, पओहरेति । यत्र मुह — मुखे आदाविति यावत् पओहर — पयोधर मध्यगुरुर्जगण इति यावत् ठिआ — स्थित, तहअ — तथाच एक — एक हत्थ — हस्तो गुर्वन्त सगणइत्यर्थ दिआ — दत्त, पुणोवि — पुनरपि तह सठिआ — तथा सस्थितौ पुनरपि ज[ग]ण-सगणौ कर्त्तव्यावित्यर्थ, तहअ — तथाच गध — गध लघु सञ्ज्ञा किआ — सञ्ज्ञीकृत । उणो — पुन वलअ जुआ विमल सह हारा — वलययुगविमलशब्दहारा वलयो गुरुस्तद्वय शब्दो-लघु हारो गुरुरेते इत्यर्थ पलति — पतति, चउग्गलअ — चतुरग्राश्च वीसआ — विंशतिर्मात्रा इति शेष पततीति पूर्वेणान्वय, तत् पुहवि णाम छदो — पृथ्वीनामच्छन्द मुणो — ज्ञायताम् ॥ अत्र मात्राकथन पादपूरणार्थमेव, जगण-सगण-जगण-सगण-यगण-लघु-गुरुरचित पृथ्वीच्छन्द इति निष्कृष्टोऽर्थ । ।ऽ।, ।।ऽ, ।ऽ।, ।।ऽ, ।ऽऽ, ।ऽ　(E)

१७६ । अथ सप्तदशाक्षरात्यष्टी ॥ पओ इति । पयोधरो मुखे स्थितस्तथा हस्त एको देय पुनरपि तथा सस्थितस्ततश्च गध सञ्ज्ञीकृत । पतति वलययुग विमल शब्दहारौ पुनश्चतुरधिकविंशति पृथ्वीनामच्छन्दो जानीहि ॥ पयोधरो जगण, हस्त सगण, पुनरपि जगण-सगणौ कार्य्यौ इत्यर्थ । गधो लघु', वलयो गुरु, शब्दो लघु, हारो गुरु । (G)

जहा,

झणझ्झणिअ[1] णेउरं[2] रणरणंत कांची[3]गुणं
सहास मुह पंकअं अगुरु धूम[4]धूपुज्जलं ।
जलंत मणि दीविअं[5] मअण केलि लीलासरं[6]
णिसामुह[7] मणोहरं जुअइ[8] मंदिरं राजते[9] ॥ १७७[1] ॥

पृथ्वी ।

---

१७७। उदाहरति। झणज्झणितनूपुर रणरणत्काञ्चीगुण सहासमुखपङ्कजम् अगुरुधूमधूपोज्ज्वल। ज्वलन्मणिदीपक मदन-केलिलीलासर निशामुखमनोहर युवतिमन्दिर राजते॥ अगुरु-धूम एव धूप, सहास मुखपङ्कज यत्र अतएव लीलासर । (C)

१७७। पृथ्वीमुदाहरति, झणझ्झणिअ इति। झणझ्झणिअ णेउर—[झण]झणितनूपुर झणझणेति रव कुर्वन्नूपुराख्य भूषण यस्य तत्तादृशमित्यर्थ, रणरणत काची गुण—अतिगभीरशब्दाय-मान काञ्चीगुणो यस्य तदित्यर्थ, सहास मुह पकअ—सहास मुखमेव पङ्कज यस्य तत्तादृग्विधमित्यर्थ, अगुरु धूम धूपुज्जल—अगुरुधूमधूपोज्ज्वल। जलत मणि दीवअ—ज्वलन्मणिदीपक ज्वलद्दीप्यमान भूषणमणिरेव दीपक यत्र तादृशमित्यर्थ, मअण

---

१७७। १ झलझणिअ (B) झणज्झणिअ (C) झणझणिअ (F) २ भूषणं (A, B & C) ३ कची (A) ४ Dropt in (B) ५ दीपअ (A) दीवअ (B & C) ६ मअण कल कीला सर (A) मरण कोल कीला (B) मअण कोलि कीला सर (C) ७ Dropt in (B) णिसामुख (C) ८ जुवइ (B, C & F) ९ रेहइ (A) रेहए (B & C) १ १७३ (A)

[The following form of versification— मालाधरनामक वृत्त, is not given in MS (E) — Ed]

पढम दिअ बिप्पआ तहअ[1] भूवई थप्पिआ
चरण गण तीअओ तहवि[2] भूवई दीअओ ।
चमर[3]जुअ अग्गला बिमल गंध हारुज्जला
भणइ[4] फणि सेहरा[5] मुणहु छंद[6] मालाहरा ॥ १७८[7] ॥

---

केलि लीलासर—मदनकेलिलीलासर णिसासुह मणोहर—सध्याप्रादुर्भावातिरमणीयमित्यर्थ, जुअइ मंदिर—तरुणिलक्षण मंदिर राजते शोभते ॥ पृथ्वी निवृत्ता । (E)

१७७ । यथा । झणझणितनूपुर रणरणत्काचीगुण सहासमुखपङ्कजम् अगुरुधूमधूपोज्ज्वल । ज्वलन्मणिदीपित मदनकेलिलीलासरो निशासु मनोहर युवतिमदिर राजते ॥ (G)

१७८ । प्रथम दीयता विप्रस्तथाच भूपति स्थाप्यता चरणगणस्तृतीय तथाच भूपतिर्दीयते । चामरयुगाग्र विमलगन्धहारोज्ज्वल भणति फणिशेखरो ज्ञायता मालाधर ॥ (C)

१७८ । पढेति ॥ प्रथमो देयो विप्रस्ततश्च भूपति स्थापित चरणगणस्तृतीयस्ततश्च भूपतिर्दत्त । चमरयुगाग्य विमलगध हारोज्ज्वल भणति फणिशेखरो ज्ञायता छदो मालाधरा ॥ विप्रश्चतुर्लघु, भूपतिर्जगण, चरणो भगण, चमरो गुरु, गधो लघु, हारो गुरु । (G)

---

१७८। १ तहवि (B & C) २ तहअ (F) ३ चरम (C & F) ४ फणइ (F) ५ सारआ (A) ६ मुणह च्छन्द (C ७ १७४ (A)

जहा, वहइ मलआणिला बिरहि चेउ संतावणा[1]
रअइ[2] पिक पंचमा विअसु केसु फुल्ला वणा ।
तरुण[3] तरु पेल्लिआ[4] मअलु[5] माहवी वल्लिआ
वितर[6] सहि णेत्तआ समअ[7] माहवा[8] पत्तआ ॥
१७९[9] ॥ मालाधरः ।

---

१७९ । उदाहरति । वहति मलयानिलो विरहिचित्तसन्तापनो वदति पिक पञ्चम विकशित किंशुक फुल्ल वन । तरुणतरौ प्रेरयति मुकुल माधवी वल्ली विस्तारय सखि नेत्रे माधवसमय प्रेक्षता ॥ (C)

१७९ । यथा । वहति मलयानिलो विरहिचेत सतापनो-रवीति पिक पचम विकसित किंशुकपुष्पवन ॥ तरुणतरुपल्लवा मुकुलिता माधवी वल्लिका विस्तारय सखि नेत्रे समयमाधव-प्राप्त ॥ (G)

[शिखरिणी and मन्दाक्रान्ता are mentioned in MS (H), but as they are not found in any of the others, they have been here left out —Ed ]

---

१७९ । १ सन्तापणा (F) २ रणइ (B & C), रवइ (F) ३ तरण (F) ४ पल्लवा (A) ५ मऊलु (A), मऊल (F) ६ वितर (F) ७ समर (C) ८ मावद्दा (F) ९ १७५ (A)

कुंतीपुत्ता तिस्सा दिज्जउ[1] मंथा सठवि[2] एक्का पाए
एक्का हारा[3] दुज्जे[4] कंकणु[5] गंधा सठवि जुग्गालाए[6] ।
चारी हारा[7] भव्वा कारउ[8] पाआ अंतहि सज्जीआए[9]
सप्पा राआ सुद्धा[10] काअउ जंपे[11] पिंगल[12] मंजीरा ए[13] ॥
१८०[14] ॥

१८० । अथाष्टादशाक्षरा यथा । कुन्तीपुत्रास्त्रयो दत्ता मस्तके संस्थाप्यतामेक पाद हारहस्तौ द्वे कङ्कणे * * ते युगल। चत्वारो-हारा भव्याकारा पादान्ते सज्जा आगता सर्पराज शुद्धाकारो-जल्पति पिङ्गलो भणति * * ॥ कुन्तीपुत्र कर्णस्तेन दिगुरुगण, मस्तके आदौ, हस्तोऽन्तगुरुश्चतुष्कल, कङ्कण गुरुर्गन्धो लघुर्हारो-गुरु । (C)

१८० । अथाष्टादशाक्षरचरणस्य वृत्तस्य चतुश्चत्वारिंशोत्तरैक-शताधिकद्विषष्टिसहस्रोत्तरलक्षद्वय २६२१४४ भेदा भवन्ति, तत्र द्वि[त्रि]सप्तत्युत्तरषट्शताधिकद्वादशसहस्रतम[१२६७३] भेद मञ्जीर-नामक वृत्त लक्षयति, कुंतीपुत्तेति। यत्र मया — मस्तके प्रथम-

१८० । १ दिज्जइ (A), दिज्जा (B) २ सठइ (A) ३ हारा चक्का (A), हारा चत्था (B & C), एजा हारा (E) ४ दिज्जे (A) ५ कक्षा (A) ६ जुग्गा पाए (A), जुग्गा जाए (B & C), जुग्ग लाए (E) ७ हारउ (A) ८ भावा कारउ (E) ९ सठीआए (A) सज्जीपाए (B & C), सजीआए (E) १० सुद्ध (B) ११ जल्पे (B) १२ पिगलु (C) १३ मजरीए (A & F) १४ १७६ (A)

मिति यावत् तिण्णा—त्रीन् कुतीपुत्रान् गुरुद्वयात्मकान् गणा-
निति यावत् दिण्णउ—दत्त्वा एक्का—एक पाए—पाद गुर्वादि-
भगणमि[द]त्यर्थं सठवि—सस्थाप्यते, ततश्च एक्का हारा—एको-
हार गुरु ककण दुण्णे—ककणद्वय गुरुद्वयमिति यावत्, अवहट्ट-
भाषाया पूर्वव्यत्यासदोषाभावात् दुण्णे इत्यस्य व्यत्यासे अपि न
दोष, गधा—गधस्य लघोरित्यर्थं जुग्गलाए—जुगल सठवि—
सस्थाप्यते। पाआ अते [—पादाते] भव्वा कारउ—भव्याकारा
चारी हारा—चत्वारो हारा गुरव सज्जीआए—सज्जिता, ए—
एतत् मजीरा—मजीरनामक वृत्तमिति यावत्, इति सुद्धा
काअउ—शुद्धकाय शुद्धो निष्कलक कायो यस्य स तादृश इत्यर्थं
सप्पा राआ—सर्पराज पिगल जप—जल्पति ॥ (E)

१८०। अथाष्टादशाचरा इति ॥ कुतीति। कुतीपुत्रास्त्रयो-
दत्ता मथे सस्थाप्यते एक पाद एको हारो द्विककण गधयो
सस्थाप्य युगल ॥ चत्वारो हारा भव्याकारा पादाते सज्जिता
सर्पराज शुद्धकायो जल्पति पिगलो मजीर ॥ कुतीति द्विगुरु,
मथे आदौ, पादो भगण, हारो गुरु, ककण गुरु, गधो लघु। (G)

१८०। अष्टादशाचरप्रस्तारे कानिचिच्छन्दास्याह। कुतीपुत्ता
इत्यादि। कुन्तीपुत्रान् त्रीन् दत्तान् मस्तके सस्थाप्य, एक पादे
हार हस्तो द्विगुण ककण, गन्ध सस्थापय युग। तत्र चत्वारो-
हारा भव्याकारा पादाते सज्जीभूता सर्पराज शुद्धकायो-
जल्पति पिगलो मजीरा ॥ यत्र पादे मस्तके आदौ कुन्तीपुत्रान्
कर्णगणान् गुरुयुग्मगणान् त्रीन् सस्थाप्य हारो गुरुर्हस्त सगण:

जहा, गज्जे मेहा णीला कारउ[1] सद्दे मोरउ[2] उच्चा[3] रावा
ठामा[4] ठामा बिज्जू रेहउ[5] पिंगा देहउ किज्जे[6] हारा ।
फुल्ला णीवा पीवे[7] भम्मरु[8] दक्खा मारुश्र[9] बीश्रंताए
हंहो[10] हंजे काहा[11] किज्जउ[12] श्राश्रो[13] पाउस[14] कीलं-
ताए[15] ॥ १८१[16] ॥ मंजीरा ।

---

ककणो द्विगुण ककणो गुरुस्तेन गुरुद्वय देय, गधयुग लघुद्वय मस्थाप्य चत्वारो हारा गुरव मज्जीभूता पादान्ते स्थिता, पिगलस्तत् छदो मजीरा जल्पति। श्रत्र नवसु नवसु वर्णेषु यति। उक्त छद पारिजाते। मौ द्वावादौ सपन्नावथ भो म सोऽप्यथ म स्यादन्ते, प्राग्विश्राम रन्ध्रे धारय भूयो रन्ध्र इद भाषन्त [?]। मजीरा ता नागेशा [?] सम्यगबन्धमुदाराकारा, भावा वेदे [?] तद्भावथ मुचत्स्वादुसुधाधारा [?] ॥ (H)

१८१। उदाहरति। गर्ज्जन्ति मेघा नीलाकारा शब्दायन्ते मयूरा उच्चारावा, स्थाने स्थाने विद्युद्राजते पिङ्गलदेहे[हा] क्रियते हार। फुल्लेषु नीपेषु भ्रमरा पिबन्ति दक्षो मारुतो वीजयति, हहो हञ्ज कि क्रियताम् श्रागता प्रावृट् क्रीडन्ती ॥ क्रियते

---

१८१। १ काश्रउ (A) २ मोरा (A, E & F) ३ चा (B) उचा (E)
४ थामा (A) ५ रेहा (A), रेहइ (E & F) ६ किज्जउ (A), कीज्जे (E)
७ भम्मे (A), पिब्बे (B & C) ८ भामरु (A) ९ मारुइ (B) १० हो (B)
११ काहे (A, B & C) १२ किज्जइ (B) १३ श्राश्रा (A), श्राऊ (B & C)
१४ पाऊस (E) १५ कीश्रणाए (A) १६ १७७ (A)

ज्ञायते, इचो मानभञ्जने दचिण इत्यर्थ, हहो औत्सुक्ये, हञ्ज-इति चेटीसम्बोधन। (C)

१८१। मञ्जीरमुदाहरति। [णीला कारउ—] नीलाकारा मेहा—मेघा गज्जे—गर्जति उच्चा रावा—उच्चस्वरा मोरउ—मयूरा सद्दे—शब्दायते, ठामा ठामा—स्थाने स्थाने पिगा देहउ—पिगदेहा पीतवर्णेति यावत् बिज्जू—विद्युत रेहइ—राजते हाराश्च किज्जे—क्रियते मेघैरिति भाव। फुल्ला णीवा—पुष्पितान् नीपान् कदम्बपुष्पाणि भम्मरु—भ्रमरा पीवे—पिबति, दक्खा—दच मानिनीमानभञ्जने इति भाव मारुग्र—मारुत बीग्रताए—वीजयति, हहो हञ्जे—चेटिके काहा किज्जउ—कि क्रियता कि विधीयतामिति यावत्, कीलताए—क्रीडती पाउस—प्रावृट् आओ—आगता॥ मान त्यक्त्वा कान्तमुपगच्छेति चेटी-मुखान्निष्कासयितु कस्याश्चिन्मानिन्या प्रावृडागमनात् कि विधी-यतामिति चेटीं प्रति वाक्य। मञ्जीरो निवृत्त। (E)

१८१। यथा। गर्जति मेघा नीलाकारा, शब्दायते मयूरा-उच्चारावा, स्थाने स्थाने विद्युद्रेजते पिगदेहा क्रियते हार। फुल्लान्नीपान् पिबति भ्रमरा दचो मारुतो वीजयति, हहो हञ्जे कि क्रियताम् आगता प्रावृट् क्रीडती॥ (G)

१८१। उदाहरणमाह, गज्जे मेहा इत्यादि। गर्ज्जन्ति मेघा नीलाकारा मयूरा शब्दायन्ते उच्चाराव केकामित्यर्थ, स्थाने स्थाने राजते पिगा विद्युद्देहे कृता हारा इवाहार्य्या मेघैरिति बोद्धव्य। नीपा कदम्बा फुल्ला अर्थात् मधु पिबतो भ्रमरा दृष्टा-

ज इंदासणा एक्क गणा[1] सुहावेहि[2] पाएहि पाए
ज[3] वण्णा[4] दहा अठ्ठ[5] सोहे सुदंडा[6] सुठाए[7] सुठाए[8] ।
दहा तिण्णि गुणा जहा[9] सव्वला[10] होइ[11] मत्ता सुपाए[12]
फणिंदा भणंता किलाचक्क[13] छंदो[14] णिबद्धाइ जाए ॥
१८२[15] ॥

---

मारुतो वाति, हजे मया किं कर्त्तव्यम् आगता [प्रावृट्] कान्तो-नागत ॥ (H)

१८२ । यत्रेन्द्रासननामैकगण सुखयति पदे पदे तद्वर्णैरष्टा-दशभि शोभते दण्ड स्थाने स्थाने। दश त्रिगुणीकृता यथा सबला-भवन्ति मात्रासु पादे फणीन्द्रो जल्पति क्रीडाच्छन्दो * * जायते ॥ एक इति गणान्तरव्यवच्छेदाय, स्थाने स्थाने दण्डो लघु समीचीने स्थाने स्थाने शोभत इत्यनुषज्यते । दश त्रिगुणितास्त्रिंशन्मात्रा, सबला समञ्जसा । (C)

१८२ । अथाष्टादशाक्षरचरणस्य वृत्तस्यैक[स्य] पञ्चाशदुत्तरशत-त्रयमा[चतु शता]धिकसप्तत्रिंशत्सहस्रतम भेद [३७४५०] क्रीडाचक्र-नामक वृत्त लक्षयति, ज इदासणेति । ज इदासणा—यत्र इन्द्रा-

---

१८२ । १ गन्धा (C) २ सुहावेइ (A), सुवेहि (B), सुहावेइ (E) ३ न (A, B & C) ४ रण्णा (B & C) ५ चाइ (B & C) ६ इदत्ता (A), इदण्डा (B & C), सुदण्डा (E) ७ Dropt in (A & E) ८ सुट्टाए (A) सुठाए (E) ९ जहि (A) १० सठणा (E & F) ११ होति (E), होमि (F) १२ सुठाए (E) १३ विलाचक्क (F) १४ कदा (E), चदा (F) १५ १७८ (A)

सन लघ्वादिर्यगण इति यावत् तदग्रे एवकार पूरणीयस्तथा-चेंद्रासनमेवेत्यर्थ एक्क—एक नान्यगणमिलित इति यावत् गणा—गण पाएहि पाए—पादे पादे सु[सु]हावेइ—शोभते यत्र पादे यगणातिरिक्तो गण न पततीत्यर्थ, सुदंडा—सु शोभना-दंडा लघवो ज[य]गणादिभूता इति भाव येषु तादृशा इत्यर्थ दहा अट्ठ—अष्टादश बखा—वर्णा यत्र सूखए सूठाए—सुस्थाने णिबद्धाइ—निबद्धा सोहे—शोभते, जहा—यत्र दहा तिखि गुखा—दश त्रिगुणिता त्रिंशदिति यावत् मत्ता—मात्रा सुपाए—सुपादे सठआ—सस्थिता' होति—भवति, तत किलाचक्क छंदा—क्रीडाचक्र छंद जाए—जायते इति फणिंदा—फणींद्र पिंगल भणता—भणति॥ यगणषड्रचितचरण क्रीडाचक्रमिति फलितार्थ। (E)

१८२। ज इति। यत्र इंद्रासनमेको गण शोभते पादे पादे, यत्र वर्णा दशाष्टौ शोभते सुदंडा सुस्थाने सुस्थाने। दश त्रिगु-णिता यत्र सस्थिता भवति मात्रा सुपादे, फणींद्रो भणति क्रीडा-चक्र छंदो निबद्ध जात॥ इंद्रासन यगण, सुष्ठु शोभना, दंडा लघव। यगणेनैव सर्वे वर्णा कार्या इत्यर्थ। (G)

१८२। ज इंदासणा इत्यादि। यत्र इन्द्रासनमेको गण सुखयति पादे पादे, तत्र वर्णा दशाष्ट शोभन्ते दण्डा स्वस्थाने **। दश त्रिगुणा यत्र सर्वा मात्रा भवति मात्रासु पादे, फणीन्द्रो भणति क्रीडाचक्र छन्दो निर्भ्रान्त जात॥ इन्द्रासनमिति आदिलघो पञ्चकलस्य नाम यगण इत्यर्थ, तत्र वर्णा दश अष्ट वर्णानामष्टादश-

जहा,

जहा[१] भूत[२] बेताल[३] णच्चंत गावंत[४] खाए कबंधा
सिआ[५] फार[६] फेक्कार हक्का[७] रवंता[८] फुले कण्ण रंधा[९] ।
कआ टुट्ट फुट्टेइ मंथा[१०] कबधा णच्चंता हसंता[११]
तहा बीर हम्मीर[१२] संगाम मज्झे[१३] तुलंता जुअंता[१४] ॥
१८३[१५] ॥ क्रीडाचक्रं[१६] ।

सख्या तेन षड्यगणा इत्यर्थं शोभन्ते दीयन्ते। दण्डा लघव स्वस्थाने स्वस्थाने यत्र दश त्रिगुणा सकला मात्रा भवति त्रिंशन्मात्रा पादे इत्यर्थ । एतच्छदो वीररसे योग्यम् । उक्त छद पारिजाते, यकारैर्यदा सनिविष्टैरष्टैरादृतश्चारुबन्ध, तदा क्रीडचक्र भुजगाधिराजोऽवदत् सत्यसध । इद वीरसभावकाव्यानुबन्धे मनोज्ञप्रबध, कवीना यशो निर्मल सविधत्ते त्रिलोकीनिबद्ध ॥ (H)

१८३ । उदाहरति । यथा भूतवेताला नृत्यन्ति गायन्ति खादन्ति कबन्धान्, शिवास्फारफेत्कारशब्दा स्फोटयन्ति कर्णरन्ध्राणि । कायस्त्रुट्यति स्फुरति मस्तक कबन्धा नृत्यन्ति हसन्ति, वीरहम्मीर सग्राममध्ये तुलयन् ज्वलति ॥ कबन्धा प्रेतशरीराणि, हक्कशब्द उच्चै शब्दो देशी, तुलयन् सम्पादयन् । (C)

१८३ । १ जहा (A) २ भूअ (F) ३ वेआल (B) ४ गावन्त (B) ५ सिवा (A) ६ फेर (A), फाए (B & C) ७ हक्का (C) ८ वलन्ता (A), वलन्ता (B & C) ९ वधा (A) १० मत्ता (A), मत्था (B & C) ११ Dropt in (E) १२ हम्मीर (B & C) १३ मझझे (E & F) १४ बुलता (A), जझता (E), जुज्झता (F) १५ १७९ (A) १६ क्रीडाचन्द्र (B & C)

आइ रग्गण हत्य[1] काहल ताल दिज्जहु[2] मज्झआ[3]
सद्द हार पलंत बिस्सबि[4] सब्ब लोअहि[5] बुज्झिआ[6] ।
बेबि[7] काहल हार पूरहु संख कंकण सोहणा
णाअ राअ भणंत सुंदरि चच्चरी मण[8] मोहणा ॥ १८४[9] ॥

---

१८३ । क्रीडाचक्रमुदाहरति, जहा इति । जहा — यत्र कवधा — कवन्धान् खाए — भक्षयित्वा भूत बेताल — भूता बेताला णच्चत गावत — नृत्यति गायति, सिआ फार फेक्कार हक्का रवता — शिवा स्फारफेत्कारहक्का रुवत्य कण्ण रधा फुले — कर्णरन्ध्र स्फुटति । कआ टुट्ट — कायस्त्रुटति, मथा — मस्तक फुट्टेइ — स्फुटति, कवधा णचता हसता — [कवधा] नृत्यति हसति, तहा — तत्र सगाम मज्झे — सग्राममध्ये वीर-हम्मीर तुलता लरित सन् जुझता — युध्यते ॥ क्रीडाचक्र निवृत्तं । (E)

१८३ । यथा । यथा भूतवेताला नृत्यतो गायति खादयित्वा कवधान् शिवा स्फारफेत्कारहक्का रुवत्य स्फुटति कर्णरन्ध्र । काय-स्त्रुटति, मस्तक * * कवधा नृत्यतो हसति, तथा वीर हम्मीर सग्राममध्ये लरित युध्यति[ते] ॥ (G)

१८३ । उदाह[र]णमाह, जहा भूत इत्यादि । यत्र भूता बेताला नृत्यति गायति खादन्ति कवधान्, शिवाना स्फारा

---

१८४ । १ हत्थ (A) २ दिज्जउ (B & C), दिज्जइ (E) ३ मझझआ (E), मज्जआ (F) ४ पुसवि (B & C) ५ लोअच्च (B), लोअवि (C) ६ बुझझआ (E), बुज्जिआ (F) ७ देवि (E) ८ भण (E & F) ९ १८० (A)

फेत्कारा अनुकरणैरुक्ता शब्दा बलन्ति प्रसरन्ति स्फुटति कर्ण-रन्ध्राणि। छन्ना भग्नच्छिन्नमस्तका कबन्धा शिरोरहिता वीरा-नृत्यति हसन्ति, तत्र वीरहवीर सग्राममध्ये ज्वलन् भिलत इति विपक्षसमुखीभूय युद्ध करोतीत्यर्थ॥ (H)

१८४। आदौ रगण हस्त काहल ताल दीयता मध्ये शब्द हार पतति पुनरपि शब्द हार द्वयमपि सर्व्वलोकैर्बुध्यते। द्वे अपि काहले हार पूरयन् शङ्खकङ्कणाभ्या शोभना नागराजो-भणति चर्च्चरी मनोहारिणी॥ द्वयमपि शब्दहारौ वारद्वयमित्यर्थ, एव चर्च्चरीति योज्यम्। (C)

१८४। अथाष्टादशाक्षरचरणस्य वृत्तस्यैकोनविंशत्युत्तरत्रिनवति-सहस्र [९३०१९] तम भेद चर्च्चरीनामक वृत्त लक्षयति, आईति। आइ — आदौ रग्गण — [रग]णो मध्यलघुर्गण इत्यर्थ *** ताल — तालो गुर्वादिस्त्रिकल इति यावत् दिज्जिह — दीयता मझ्झआ — मध्ये एतदनतरमित्यर्थ सद्द हार — शब्दहारयो लघुगुर्वोरिति यावत् बिण्णवि — द्वयमपि पलत — पतति शब्दहारौ वारद्वय [प]तत, बेवि काहल — द्वावपि काहलौ लघू हार — हार गुरु-मित्यर्थ पूरऊ — पूरय ततश्च सोहणा — शोभने सख ककण — शखककणे लघुगण[गुरू] इति यावत् पूरयेति पूर्वेणान्वय, हे सुदरि सव्व लोअहि बुझ्झआ — सर्वलोकैर्बुद्धा मोहणा — मोहिनीं चित्तस्येति भाव चर्च्चरीं भण — कथय इति णाअ राअ — नाग-राज पिगल भणत — भणति॥ रगण सगण-जगणद्वय-भगण-[रगण]रचितचरणा चर्च्चरीति फलितार्थ। (E)

जहा,

पात्र[1] णेउर झंझणक्कइ[2] हंस सद्द सुसोहणा[3]
थूर[4] थोर थणग्ग णच्चइ मोत्तिदाम[5] मणोहरा ।
बाम दाहिण[6] धारि[7] धावइ तिक्ख चक्खु कढक्खआ[8]
काहु[9] णाअर[10] गेह मंडणि[11] एहु[12] सुंदरि पेक्खिआ[13] ॥
१८५[14] ॥ चर्चरी[15] ।

---

१८४ । आईति । आदौ रगणो हस्त काहल तालो दीयते मध्ये शब्दहारौ पततो द्वयमपि सर्वलोकैर्बुद्धा । द्वावपि काहलौ हार पूरय शखककण शोभन नागराजो भणति सुदरि चर्चरीं भण मोहिनीं ॥ हस्त सगण, काहलो लघु, तालो गुरुलघुरूपो-गण, शब्दहारौ लघुगुरू द्विवार कार्य्यौ इत्यर्थ, शखो लघु ककण गुरु ॥ (G)

१८४ । आइ रगण इत्यादि । आदौ रगण हस्त काहल तालो दातव्यो मध्ये शब्दहारौ पतत द्वावपि सर्वलोकैर्बुद्धा । द्वौ काहलौ हार पूरय शङ्ख कङ्कण शोभन नागराजो भणति सुन्दरी चर्चरी मनोमोहनी ॥ आदौ रगणस्ततो हस्त सगणस्तत

---

१८५ । १ पाए (C) २ जझझणक्कइ (A), जझभणक्कइ (F) ३ सुसोहरा (A) सुसोहणा (B) सुसोहणा (E) ४ थोर (A), थूल (F & F) ५ मोत्ति सदाम (C) ६ डाहिण (B & C) ७ धाइ (B) धालि (E & F) ८ कड कखआ (A), कलकखआ (B & C) ९ काहि (A, B & C) १० पूरस (A B & C) ११ मण्डिण (B & E) १२ एह (A), एहि (B & C) १३ देक्खिआ (A & F) १४ १८१ (A) १५ चाचरी (C)

काहलो लघुस्ततस्तालो गुरुलघुरूपो मध्ये देय, शब्दहारौ लघुगुरू पतत वारद्वय तेन पुनरपि शब्दहारौ लघुगुरू पतत, द्वौ काहलौ लघू ततो हार गुरु पूरयत, शखो लघु तत ककण गुरु, शोभन नागराजो भणति चर्चरीच्छन्द, चर्चरी कीदृशी सुन्दरी अतश्च मनोमोहनी, अन्यापि सुदरी हारशखककणै शोभना भजति सुदरीपद । (H)

१८५। उदाहरति । पादे नूपुर झणझणायते हसशब्दसुशोभन स्थूले विस्तीर्णस्तनाग्रे नृत्यति मौक्तिकदाम मनोहर । वामदक्षिणपार्श्वयोर्धावति तीक्ष्णचक्षु कटाक्ष, कस्य नागरस्य गेहमण्डनी सुन्दरीय प्रेक्ष्यते ॥ थोरशब्दो विस्तीर्णे देशी, धारशब्द पार्श्वे, तीक्ष्णशब्दश्चक्षुर्विशेषणम् । (C)

१८५। चर्चरीमुदाहरति, पाअ णेउरेति । हस सद्द सुसोहणा —हसशब्दवत् सुशोभन णेउर—नूपुर यस्या इति शेष यथायथ योजनीय पाअ—पादयो झझणक्कइ—झझणायते, थोर थणग्ग—विस्तीर्णस्तनाग्रे थूल—स्थूल मणोहर—मनोहर मोत्तिदाम—मौक्तिकदाम णच्चइ—नृत्यति, तिक्खचक्खु क[ढक्ख]आ —तीक्ष्णचक्षु कटाक्ष वाम दाहिण—वामदक्षिणयोर्भागयोरिति भाव * * *। (E)

१८५। यथा। पादे नूपुर झझणायते हसशब्दसुशोभन, स्थूल स्थूलस्तनाग्रे नृत्यति मौक्तिकदाम मनोहर । वामदक्षिणयोर्धारयोर्धावति तीक्ष्णचक्षु कटाक्ष, कस्यचिन्नागरस्य गेहमण्डिनीय सुदरी दृष्टा ॥ (G)

मो सो जो[1] स त तो[2] समंत गुरुबो[3] एऊण[4] बिंसाउणो[5]
पिंडोश्रं सउ बीस[6] मत्त भणिश्रं अठ्ठासि जोणी उणो[7]।
जं छेहत्तरि बखश्रो[8] चउ पश्रो[9] बत्तीस रेहं[10] उणो[11]
[चो]श्रालीसह[12] हार[13] पिंगल भणे[14] सद्दूलसट्टा[15]
मुणो ॥ १८६[16] ॥

---

१८५। उदाहरणमाह, पाश्र णेउर इत्यादि। पादे नूपुर झणझणायते हंसशब्दवत् सुशोभन स्थूलोच्चस्तनाग्रे नृत्यति मुक्तादाम मनोहर। वामदक्षिणयोर्धाव्योर्धाडि लोके प्रसिद्ध ** तीक्ष्णचक्षु-कटाक्ष, कस्य पुरुषस्य गेहमण्डनकर्त्रीय सुदरी दृष्टा ॥ (H)

[In MS (H), a metre named मुक्ताहारः is transcribed with an example from another book As this has not been mentioned in any of the other MSS so it has not been adopted here —Ed]

१८६। अथोनविंशत्यक्षरा। मो ऽऽऽ सो ।।ऽ जो ।ऽ। स ।।ऽ त ऽऽ। अस्य इय तदन्ते गुरु एकोनविंशतिर्वर्णा पिण्डोऽय विंशत्यधिकशत मात्राणा भणितम् अष्टाशीतियोनि पुन । यत्

---

१८६। १ जे (B) २ ता (A B & C) ३ गुरुश्रो (A) गुरुश्रो (B & C) ४ एउण (A) एऊण (F) ५ विसावणो (E & F) ६ विस (F) ७ जो णिप्पुणो (A), या णीपुणो (B & C) ८ वखणो (A, B & C) ९ पश्रा (A) १० रेहा (A) रेहे (E) ११ मुणो (A), पुणो (B & C) १२ एश्रालीसह (A & B), चौश्रालीसह (C & E), चौवालीसह (E) १३ णाम (A, B & C) १४ कई (A, B & C) १५ सद्दूल सो सट्टश्रो (A) १६ १८२ (A)

षट्सप्ततिवर्णाना चतुर्भि पादैर्द्वात्रिंशद्रेख जाने [?] राज्ञा [?] नागाना [?] नाम्ना पिङ्गलेन कविना शार्दूल [?] समज्यते॥ सट्ट इति पाठे शार्दूलसट्टक इति नाम, जाणे इत्यस्य ज्ञायत इत्यर्थ । चतुर्भि पादै विंशत्यधिकशत मात्राणाम् अष्टाशीतिमात्राणा योनि स्थान चतुश्चत्वारिंशद्गुरव । (C)

१८६ । अथैकोनविंशत्यक्षरचरणस्य वृत्तस्य पचलक्ष चतुर्विंशति-सहस्रमष्टाशीत्युत्तर शतद्वय ५२४२८८ भेदा भवति, तत्र सप्तत्रि-शोत्तरशतद्व[त्र]याधिकैकोनपचाशत्सहस्रोत्तरैकलक्षतम [१४९३३७] भेद शार्दूलविक्रीडित[?]नामक वृत्त लक्षयति, मविति । ज — यत्रै-कोनविंशत्यक्षरचरणे वृत्ते प्रथम मो — मगणस्त्रिगुरुर्गण, तत सो — सगणोऽतगुरु, ततश्च जो — जगण मध्यगुरु, ततश्च समत-गुरवो — सम्यगते गुरुर्येषा तादृशा स त तो — सतता सगण-तगण-तगणा इत्यर्थ सगणोऽतगुरुस्तगणोऽतलघु पुनश्च तगण इत्यर्थ, एवप्रकारेण पादे एऊण विसा वणो — एकोनविंशतिर्वर्णा पतति, यत्र च चउ पओ — चतु पादे पिंडोअ — पिण्डीभूता पुन बत्तीस रेहे — द्वात्रिंशद्रेखा लघव इत्यर्थ अट्ठासि जोणी — अष्टाशीति-योनय अष्टाशीतिमात्राणा कारणानीति यावत् चौ[चो]आली-[सह] हार — चतुश्चत्वारिंशत् हारा गुरव येषामष्टाशीतिमात्रा-भवति तादृशास्तुश्चत्वारिंशद्गुरव इत्यर्थ, एवप्रकारेण छेहत्तरि वण्णओ — षट्[सप्ततिवर्णा] प्रतिचरण [?] सउ वीस मत्त — विंशत्य-धिकशतमात्राश्च भणिअ — भणिता, तत सद्दूलसट्ट — शार्दूलसाटक मुणो — जानीत इति पिगल भणे — पिगलो भणति॥ (E)

१८६ । अथैकोनविंशत्यक्षरा अतिधृति ॥ मो सो इति ॥ म स ज स त ता समतगुरव एकोनविंशतिर्वर्णा पिण्डीभूता शत विंशतिर्मात्रा भणिता अष्टाशीतियोनय पुन । यत् षट्सप्ततिवर्णास्तु पदेषु द्वात्रिंशद्रेख पुनश्चतुश्चत्वारिंशत् हार पिंगलभणित शार्दूलशाटक जानीहि ॥ हारो गुरुरते कार्य इत्यर्थ, अष्टाशीतिरिति गुरुमात्रापर । (G)

१८६ । ऊनविंशत्यक्षरप्रस्तारस्य कतिचित् छन्दांसि वदति मो सो जो इत्यादि । म स ज सतता समतगुरुका एकोनविंशति पुन पिण्डोऽय शत विंशतिर्मात्रा भणिता अष्टाशीतिर्योनि पुन । यत्र षट्सप्ततिवर्णास्तु पदेषु द्वात्रिंशद्रेखा प्राप्ता एकचत्वारिंशन्नाम पिंगलकवे शार्दूलशाटको ज्ञात ॥ मो मगण, स सगण, जो जगण, स सगण, तस्तगण, पुनस्तस्तगण, समन्तगुरव अन्ते गुरुर्येषा ते तथा सतता एकोनविंशतिर्वर्णा पदे अस्य छन्दस सकलशरीर विंशत्यधिकशत मात्रा पिण्ड शरीर, तत्रापि भागमाह योनिरष्टाशीति, योनिर्जन्मस्थान कलाद्वयेन गुरुरेकश्चतुश्चत्वारिंशद्गुरूणामष्टाशीति कला योनिरुत्पत्तिस्थान चतुर्भि पदै षट्सप्ततिवर्णास्तुर्षु पदेषु द्वात्रिंशल्लघव । एव गणवर्णमात्रालघूनि कथयित्वा पारिशेष्याद्गुरुसंख्या कथयति, एकचत्वारिंशन्नामसंख्यकाश्च गुरवो भवति, कवे पिंगलस्य नाम पिंगलइत्यक्षरत्रयम एकचत्वारिंशत् त्रयश्च तेन चतुश्चत्वारिंशद्गुरवो भवति यत्र तत् शार्दूलशाटक ज्ञात । (H)

जहा,

जे लंका[1] गिरि मेहलाहि[2] खलिआ[3] संभोअ खिणो[4]रई
फारुप्फुल्ल[5] फणावली कवलणे[6] पत्ता दरिद्दत्तणं[7] ।
ते एहिं[8] मलआणिला विरहिणी णीसास[9] सपक्किणो
जादा झत्ति सिसुत्तणे वि बहला[10] तारुण्ण पुण्णा विश्रो[11] ॥
१८७[12] ॥ साद्दूलसट्ट । (C)

---

१८७। उदाहरति। ये लङ्कागिरिमेखलाया स्खलिता सम्भोगखिन्नोरगीस्फारोत्फुल्लफणावलीकवलनेन प्राप्ता दरिद्रत्व । इदानीं ते मलयानिला विरहिणीनिश्वाससम्पर्किणो जाता श्रीघ्र शिशुत्वेऽपि बहलास्तारुण्यपूर्णा इव ॥ (C)

१८७। शार्द्दूलसाटकमुदाहरति, जे लकेति । जे—ये लका गिरि मेहलाहि—लकागिरिमेखलाया त्रिकूटाचलकटकादित्यर्थ खलिआ—स्खलिता ततश्च सभोगखिन्नोरगीस्फारोत्फुल्लफणावली-कवलनेन दरिद्दत्तण—दरिद्रत्व पत्ता—प्राप्ता । ते इन्हि—इदानीं मलयानिला विरहिणीनिश्वाससपर्किण सत शिशुत्वेऽपि तारुण्यपूर्णा इव बहला जाता ॥ कर्पूरमजरीसाटके देवीनियुक्त-विचक्षणाया वाक्यमेतत् । (E)

---

१८७। १ ते लङ्का (B) २ मेहलासु (A) मेहलाइ (B & C) ३ खलीआ (E) ४ खिणो (A) ५ फारइफुल (A), फाबफुल्ल (B & C) फारफुल्ल (E) ६ फणावलणे (E) ७ इविक्कत्तण (B) ८ एणिह (B & C), इन्हि (E) ९ णीसा (B), निसास (E) १० वकुला (B & C) ११ पुण्णा विश्र (A & C) १२ १८६ (A)

पत्थारे[1] जह[2] तिणि[3] चामर बरं दीसति बसुज्जलं[4]
उक्किठ्ठं[5] लहु बिणि[6] चामर तहा उठ्ठीअ[7] गंधुग्गुरो[8]।
तिणो[9] दिस[10] सुगंध[11] चामर तहा गंधा जुआ[12] चामरं
रेहंतो[13] धअपट्ट[14] अंत कहिअं[15] सद्दूल बिक्कीडिअं[16] ॥
१८८[17] ॥

---

१८७। यथा। ये लङ्कागिरिमेखलाभ्य स्खलिता सभोगखिन्नोरगीस्फारोत्फुल्लफणावलीकवलने प्राप्ता दरिद्रत्व। ते इदानीं मलयानिला विरहिणीनिश्वाससम्पर्किणो जाता झटिति शिशुत्वेऽपि बहुलास्तारुण्यपूर्णा इव ॥ (G)

१८७। उदाहरणमाह, जे लङ्का इत्यादि। ये लङ्कागिरिमेखलात स्खलिता सभोगखिन्नोरगीस्फारोत्फुल्लफणावलीकवलने प्राप्ता दरिद्रत्व। ते इदानीं मदनाविला [?] विरहिणीनिश्वाससम्पर्किणो जाता झटिति शिशुत्वेऽपि बहुलास्तारुण्यपूर्णा इव ॥ (H)

१८८। अमुमेवार्थं प्रकारान्तरेण स्पष्टयति, पत्थारे इति। प्रस्तारय त्रीणि चामराणि दृश्यन्ते वर्णोज्ज्वलानि, उत्थापनीयौ

---

१८८। १ पच्छारे (A) २ तह (A), जइ (B & C) ३ तिण्ण (A) ४ वणूज्जल (E), वणुज्जल (F) ५ तच्चेय (A & B) उट्ठेण (C) ६ विणि (A) ७ तच्चेय (A & B), उट्ठेय (C) ८ गधगुरो (B & C), गधुगुरो (E) ९ तिणे (A & B), तिणि (C) १० दुष (B & C) ११ सुगध (E) १२ चवे (A & C), जवे (B) १३ हेर (F) १४ धयवट्ट (A), जलवट्ट (B), धवट्ट (C) १५ करणे (A, B & C) १६ सट्टो सुणो (A), सट्टा सुणे (B & C) १७ १८४ (A)

लघू द्वौ चामर तथा उत्थाप्यौ गन्धगुरू। त्रयो दीयन्तां सुगन्धाश्चामराणि तथा गन्धश्च द्वे चामरे राजमानो ध्वजपटोऽन्ते कथित शार्दूलसस्थापने॥ सट्टो मुणे इति पाठे शार्दूलशट्टको ज्ञायत इत्यर्थ, स[प्र]स्तारय विस्तारय, सुगन्धा शोभना गन्धा लघवस्तथा त्रीणि गुरूणि, ध्वजपट आदिलघुस्त्रिकल। (C)

१८८। पुनरपि शार्दूलविक्रीडित प्रकारातरेण लक्षयति, पत्थारे इति। जह—यत्र पत्थारे—प्रस्तारे वण्णुज्जल—वर्णोज्ज्वलानि तिण्णि चामर वर—त्रीणि चामरवराणि गुरूणि दीसति—दृश्यते, ततश्च उक्किट्ठ—उत्कृष्ट लहू विण्णि—लघुद्वय चामर—चामर गुरुरित्यर्थ तहा—तथा गधुग्गुरो—गधो लघु गुरुश्च उट्ठीअ—उत्थापित दत्त इत्यर्थ.। तहा—तथा तिण्णि त्रयस्त्रीणि वा सु[सु]गध—सुगधा शोभना लघव इत्यर्थ चामर—चामराणि गुरव दिज्ज—दीयते, ततश्च गधा—गधो लघु जुआ चामर—द्वे चामरे गुरू अत—अते पादाते चामरद्वयाते वेत्यर्थ रेहतो—राजमान धअपट्ट—ध्वजपटो लघ्वादिस्त्रिकल इति यावत् कहिअ—कथित तत्सद्दूल बिक्कीडिअ—शार्दूलविक्रीडित॥ (E)

१८८। पत्थार इति। प्रस्तारे यत्र त्रय चामरवरा दृश्यते वर्णोज्ज्वलमुत्कृष्ट लघुद्वय चामर तथोत्थापितो गधो गुरु। त्रयो दत्ता सुगधाश्चामरास्तथा गधो युग्मचामर राजमानो ध्वजपटोऽते कथित शार्दूलविक्रीडित॥ चामर गुरु, गधो लघु, ध्वजपटो-लघुगुरू। सङ्ख्यातरार्थे पुनरुक्ति। (G)

१८८। पूर्वोक्तलक्षणमेव प्रकारान्तरेण सुगमलक्षण करोति,

जहा,

जं धोअंजण लोल[1] लोअणजुअं लंबाल[2]अग्गं मुहं
हत्था[3]लंबिअ केस पल्लव[4]चए घोणंति[5] जं बिंदुणो[6]।
जं एक्कं सिअअं[7]चलं[8] णिवसिदं[9] तं ण्हाण[10] केलिठ्ठिआ[11]
आणीदा इअ मज्झ[12]देक्क जणणी जोईसरेणा[13]मुणा॥
१८९[14]॥ शार्दूलस्य लक्षणद्वयमेतत्। (A) सद्दूल (B & C)

---

पत्थारे इत्यादि। प्रस्तारे तत्र चयस्रामरवरा दृश्यते वर्णोज्ज्वल तथा चैव लघुद्वय चामर तथा चैव गधो गुरु। चयो दृत्ता सुगधा चामराणि तथा गन्धस्र द्वे चामरे शोभमानो ध्वजपटोऽन्तकरणे शार्दूलशाटको श्चात॥ प्रस्तारे त्रीणि चामराणि गुरवस्ततो वर्णोज्ज्वल यथा स्यादेव लघुद्वय कर्त्तव्य तथाच चामर गुरुस्तथाच गन्धो लघुस्ततो गुरुस्ततस्त्रय सुगन्धा लघव तथैव चामराणि त्रीणि गुरव इत्यर्थं ततो गन्धस्र लघुस्ततो द्वे चामरे गुरुद्वयमन्तकरणेऽन्ते शोभनध्वजपटस्त्रिकलो लघुगुरुरूप, शार्दूलशाटकमिति छन्दसो नाम। अत्र द्वादशवर्णेषु यति, सप्तसु वर्णेषु यति, क्वचिदादौ सप्तसु वर्णेषु यति ततो द्वादशसु वर्णेषु यति।

---

१८९। १ लोल (A, B & C) २ लंबाल (B) ३ हत्था (A) ४ पल्लव (A) ५ धोअन्ति (A), दोहन्ति (B), दोअन्ति (C) ६ भिन्दुआ (C) ७ सिअअ (A, B & C) ८ चल्लण (B & C) ९ णिवासिअं (F) १० तण्हाअ (A), तन्हाअ (B), तण्हाअ (C) ११ केलिट्ठिदा (B & C) १२ मज्झ (B & C) १३ जोइसरेखा (A, C & E) १४ १८५ (A)

उक्त छन्दपारिजाते, म सो ज सतता गुरुश्च विरति सूर्यैं-रश्वैर्भवेत्, नागानामधिपेन तन्निगदित शार्दूलविक्रीडितम् । एतत्प्राकृतकाव्यनिर्मितिविधौ सकीर्त्यते शाटक, विच्छेद क्वचिदस्य सप्तदिनकृत्यस्तोऽपि सलच्यते ॥ (H)

१८९ । उदाहरति । यद्धौताञ्जनशोणलोचनयुग लम्बालकाग्र मुख हस्तालम्बितकिंशुकपल्लवचयैर्घूर्णन्ति भृङ्गाङ्गना । यदेक सिच-याञ्चल निवसित तत् स्नानकेलिस्थिता आनीता इयमद्भुतैकजननी योगीश्वरेणात्मना ॥ इद कर्पूरमञ्जर्यां भैरवानन्दयोगिमन्त्राकृष्ट-नायिकावर्णन । (C)

१८९ । शार्दूलविक्रीडितमुदाहरति, जमिति । ज धोअजण लोल लोअण जुअ — यस्मात् धौताजनलोललोचनयुग धौतमजन यस्य तादृश लोचनयुग यस्मिस्तत्तादृशमित्यर्थ लवालअग्ग — लबालकाग्र लवान्यलकान्यग्रे यस्य तत्तादृश मुह — मुखमित्यर्थ तथा ज — यत हत्यालविअ केस पल्लव चए — हस्तालवितकेशपल्लवचये बिदुणो — विन्दवो घोणति — घूर्णति परितो भ्रमतीति यावत् । तथा ज — यस्मात् एक्क सिअअचल णिवसिअ — एक सिचयाञ्चल निवसित पहाणकेलिट्ठिआ त — तस्मात् हेतो स्नानकेलिस्थिता अब्भुदेक्क जणणी — अद्भुतैकजननी आश्चर्यमुख्योत्पत्तिभूमिरिति यावत् इअ — इयं कर्पूरमञ्जरी अमुना जोईसरेण — योगी-श्वरेण कापालिकभैरवानदेन आणीदा — आनीता ॥ यतो नेत्रयो-रजन धौत विन्दवश्च केशपा[शा]च्च्योतति एकमेव च वस्त्र धृत, तत स्नानकेलिस्थेयमानीतेत्यर्थ. । भैरवानदाकृष्टा कर्पूरमञ्जरीं

प्रेच्य विदूषकं प्रति राज्ञो वाक्यमेतत्। शार्दूलविक्रीडितं निवृत्तं। (E)

१८९। यथा। यद्धौताजनशोणलोचनयुगं लम्बालकाग्रं मुखं हस्तालम्बिनि केशपल्लवचये घूर्णन्ति यद्विन्दव। यद्देकं सिचयाञ्चलं निवसितं तत्स्नानकेलिस्थिता आनीता इयमद्भुतैकजननी योगीश्वरेणामुना॥ (G)

१८९। उदाहरणमाह, ज धोअ इत्यादि। यस्या धौताञ्जनशोणलोचनयुगं लम्बालकाग्रं मुखं हस्तालम्बितकेशपल्लवच[च]ये घूर्णन्ते यत्र विन्दव। यथैकं सिचयाञ्चलं निवसितं तत्स्नानकेलिस्थिता आनीता इयमद्भुतैकजननी योगीश्वरेणामुना॥ सिचयं परिधानवस्त्रं। सिचयं प्रोतशाटक इति त्रिकाण्डशेष। भैरवानन्दाकृष्टाया स्नानस्थिताया कर्पूरमञ्जर्य्या वर्णनं। (H)

[NOTE —The following verses are found in MS (A), but in none of the others —Ed]

दह बभण दह खत्तिअउ दह वेसउ दह सुद्द।
बत्तीं पर तह एक अउ साला जाति पसिद्ध॥ १८६॥ [दोहा]

तिअ पाए उणविस अक्खर धरो एकेण बीह मुणो
मत्ताण सउ बीह १२० पिंड सअले तेत्तार हार थुणो।
गधोअ चउतीस ३४ छंद सअलं सेसेण सुज्झाणिओ
बसेण सतहत्तरेहिँ [७७] भणिअ गुजाण सो सद्दओ॥ १८७॥

बिह पाए बिह कल सेस भणिअ एउस बीस धरो
बि[अ]आलीसह [४२] हार अच्छि सअले छत्तीस रेहा भ[ध]रो।

वसाए अठहत्तरेहिँ सअले बीहोत्तर मत्तआ
विस्सामे विष्ठ ठाम ठाम भणिअ हट्ठील सो सद्दओ ॥ १८८ ॥
तिष्ठ पाए विह वस सेस भणिअ एउस एको ण[प]अ
उणअसी ७९ तह वस ठाम धरिअ एआरिस हारअ ।
अठतीसे लड तच्छ तच्छ कहणा विस्साम बे जपिओ
सुच्छदो भण सेस णाअ णिउणो मोहइ सो सद्दओ ॥ १८९ ॥
असि ८० वसो चउ पाअ पाअ कहणा दिट्ठाण किट्ठाणअ
गुरु चालीसह चारिसेण ४० लडआ दिट्ठाण किट्ठाणअ ।
णउ जोणी गण मझ्झ मझ्झ सअले बीहोत्तर मत्तओ
भणु सेसा दूअ कदु वध सुरसो पचाणु* सो सद्दओ ॥ १९० ॥
सट्ठुलो पढमो वि गुंज सहठो मोहइ पचाअणो
दूकालो सव लगु बेणुणु णखी हिसालु विच्छारिओ ।
णिस्सको हिअआरु मोर दररी विवारु बीहसणो
उट्ठगो रुहिरासिणो मिअपई सचारि मोहा मुणी ॥ १९१ ॥
कुडो कक्कसु जपु गड विकटो दतारि तक्कारिओ
भीणो भीसण वक्करो भअकरो लगूर लीलाअरो ।
उट्ठको कटणो गुरार रखो पप्फुद फुक्कारिओ
एक्कके गुरु लोपि जूअ लड हो एआरिसो सद्दओ ॥ १९२ ॥

[इति] शार्दूलप्रकरणम् ।

* [This metre is elsewhere described as मत्तेभविक्रीडितम् Vide Ghosha's Compendium, p ९८—Ed ]

ठइवि[1] दिअवर जुअल[2] मज्झ[3] करअल करहि[4]
पुण[5]वि दिअवर जुअल[6] सज्ज[7] बुहअण[8] करहि।
सरस गण बिमल जह[9] णिट्ठविअ[10] बिमल मइ
तुरिअ कइ[11] उरअ वइ[12] चंदमल[13] कहइ सइ[14] ॥१९०[15]॥

---

१९०। स्थापय द्विजवरयुगल मध्ये करतल कुरु पुनरपि द्विजवरयुगल मध्ये करतल कुरु। सरसगणो विमलो यत्र अला स्थाप्यते मनोगतिना विमलमतिना उरगकविना चन्द्रमाला कथ्यते सदा॥ मध्यपदसमभिव्याहाराद् आदावन्ते च द्विजवरयुगल प्रत्याय्यते, तदेव द्रढयति पुनरपीत्यादिना। (C)

१९०। अथैकोनविंशत्यक्षर[चर]णस्य वृत्तस्य चतुःसप्तत्यु[षष्ठ्यु]-त्तरशतद्वयाधिकत्रयोविंशतिसहस्राधिकपञ्चलक्ष[५२३२६४]तम भेद चन्द्रमालानामक वृत्त लक्षयति, ठइवीति। दिअवर जुअल—द्विजवरयुगल चतुर्लध्वात्मकगणद्वयमिति यावत् ठइवि—स्थापयित्वा मज्झ—मध्ये द्विजवरद्वययुगयोरन्तराले इति यावत् कर-अल—करतल गुर्वंत सग[ण]मित्यर्थ करहि—कुरुष्व, पुणवि—

---

१९०। १ ठइअ (B & C) २ जअ (A), जुलअ (C) ३ मझ (E) ४ करइ (A) ५ पुणु (B & C) ६ Dropt in (E) ७ सज्झ (A, B & C) ८ करअल (A & C), dropt from बुहअण up to अमिअ in the first quadrant of the next śloka (B), बहुअण (F) ९ जोइ (A) जइ (C) १० तुरिअ चवइ मणगइ (A), तुरिअ चवइ मणगइ (C) सि ठठविअ (E) ११ बिमल मइ (A & C) १२ कइ (A & C) १३ चदमलु (E), चदमल (F) १४ सोइ (A) १५ १९१ (A)

पुनरपि हे बुहश्रण—बुधजन दिश्रव[रयु]श्रल—द्विजवरयुगल सज्ज—सज्ज करहि—कुरुष्व। एव च विमला सरसगणा पचेति शेष जह—यत्र नितरा स्थाप्यते विमल मइ—विमलमति तुरिश्र कइ—त्वरितकवि उरग वइ—उरगपति सइ—ता चन्द्‌मलु—चन्द्रमाला [कहइ—] कथयति॥ श्रत्र पुणवि दिश्रवर-जुश्रल मज्झ करश्रल करहीति क्वचित्पाठ, मज्झ करश्रल—मध्यकरतल मध्ये करतल यस्य तादृश द्विजवरयुगल पुनरपि कुरुष्वेत्यर्थ, परतु श्रत्र पूर्वोक्तात् मध्ये करतल कुरुष्वेत्यत्र मध्यपदसमभिव्याहारादेवाग्रिमद्विजवरस्य मध्यकरतलप्राप्त्या पुन-र्मध्यकरतलमिति द्विजवरविशेषण पद्यपूरणायैवेति सम्प्रदाय-विद, द्विजवर[द्वय]सगणोत्तरद्विजवर[द्वय]रचितचरणा चन्द्रमालेति निष्कर्ष। (E)

१९०। ठईति। स्थापयित्वा द्विजवरयुगल मध्ये करतल कुरुष्व, पुनरपि द्विजवरयुगल सज्ज बुधजन कुरु। सरसगण विमल यत्र निष्ठाप्य विमलमतिस्त्वरितकविरुरगपतिश्चन्द्रमाला कथयति ता॥ मध्ये द्विजवरयुगयोर्मध्ये इत्यर्थ। द्विजवरश्चतुर्लघु, करतल. सगण। (G)

१९०। ठइवि इत्यादि। सस्थाप्य द्विजवरयुगल मध्ये करतल कुरु, पुनरपि द्विजवरयुगल मध्ये करतल कुरु। सरसगणा विमला याम्, श्रुत्वा धारयति मनोगति विमलमतिरुरगकविश्चन्द्रमाला कथयति स॥ सस्थाप्य द्विजवरयुगल चतुर्लघून् मध्ये करतल सगण कुरु, पुनरपि द्विजवरयुगलमष्टलघूनेतावता गणपूर्त्तिर्जाता।

जहा, अमिअ कर किरण धरु[१] फुल्लु[२] णव कुसुम[३] वण[४]
कुविअ भइ[५] सर ठवइ काम णिअ धणु[६] धरइ[७]।
रवइ पिक समअ णिक[८] कंत तुअ[९] थिर हिअलु[१०]
गमिअ दिण पुणु[११] ण मिलु[१२] जाहि[१३] सहि पिअ
णिअलु[१४] ॥ १९१[१५] ॥ चंद्रमाला।

---

पाठक्रममाह, मध्ये हृदयमध्ये कलकल कुरु, कलेन उच्चैः स्वरेण पठेत्यर्थ। यत्र सरसगणा विमला यान् श्रुत्वा मनो गति मनश्चाञ्चल्य धारयति, वहिश्चाञ्चल्य न प्रकट भवति, मन स्थिरीकृत्य शृणोति वा, विमलमतिरुरगकविरेतच्छन्द चन्द्रमाला भणति स। अत्र दशसु वर्णेषु यति, पुनर्नवसु वर्णेषु यति। उक्त छन्द पारिजाते, कुरु सविरति दश लघुमेकगुरुमथ र[व]सुल-मिति रचय गणनिचयमत्र सुभणितिकुशल। अभिनवरसपरिणति चन्द्रगति किल भवति जगति सकलकविगुरुनागपतिरभिलषति ॥ (H)

१९१। उदाहरति। अमृतकर किरणधर फुल्ल नवकुसुमवन कुपितो भूत्वा शर स्थापयन् कामो निज धारयति धनु। रौति पिक समये निजे कान्तस्तव स्थिरहृदय नून गत दिन न मिलति

---

१९१। १ धर (A, B & C) २ फुल्ल (A B & C) ३ कमल (A)
४ वणु (A & C) ५ Dropt in (B) ६ धणू (E) ६ and ७ Transposed in (A, B & C) ८ णिअ (C) ९ तुअअ (F) १० हिअअ (B) हिअणु (C) ११ पुणु (B) १२ मिल (A), मिअ (B), ण मिलइ पुण (C) १३ नाहि (A) १४ णिअसु (B) णिअणु (C) १५ १९४ (A)

पुनर्याहि सखि प्रि[य]निकट ॥ निजसमयो वसन्त, नून निश्चित, तस्माद्याहि । (C)

१९१ । चन्द्रमालामुदाहरति, अमिअ करेति । अमिअ कर—अमृतकर किरण—किरणान् धरु—धरति, बण—वन फुल्लु णव कुसुम—फुल्लनूतनपुष्प जातमिति शेष, काम—काम कुविअ भ[इ]—कुपितो भूत्वा सर ठवइ—शरान् स्थापयति णिअ धणू—निजधनु धरइ—धरति । पिक—पिक कोकिल समअ—समये वसतकाले णिक—समीचीन यथा स्यात्तथा रवइ—रौति, तुअ—तव कत—कात प्रिय इत्यर्थ थिर हिअलु—स्थिर-हृदय, गमिअ दिण—गमितानि दिनानि पुन ण मिलु—न मिलति, सहि—हे सखि तस्मात् ल पिअ णिअलु—प्रियनिकटे जाहि—गच्छ ॥ कलहातरिता काचिन्नायिका प्रति सखी-वाक्यमेतत् । (E)

१९१ । यथा । अमृतकर किरणान्धरति, फुल्लति नव कुसुम-वन, कुपितो भूत्वा शरान् स्थापयति कामो निजधनुर्धरति । रौति पिक समये सम्यक्, कान्तस्तव स्थिरहृदयो गता दिवसा पुनर्न मिलति, याहि सखि प्रियनिकटे ॥ (G)

१९१ । उदाहरणमाह, अमिअ इत्यादि । अमृतकर किरण धारयति, फुल्लनवकुसुम वन, कुपितो भूत्वा शर स्थापयति कामो-निज धृत्वा धनु । रवीति पिक, समय' समीचीन, कान्तस्तव स्थिरहृदय' स्थिरप्रेमा, गत दिन पुनर्न मिलति, याहि सखि प्रियनिकट ॥ (H)

करिअ जसु सुगुणजुअ[1] बिमलमइ महिअले
ठइअ ठइ रमणि सरस गण[2] पअ पअ अले[3]।
दिअबर[4] चउ चउ पअहि भण[5] फणिवइ सही[6]
कमल गण सरस मण सुमुहि धवलअ कही[7] ॥ १९२[8] ॥

१९२। कुरुष्व रस शुला युवते विमलमते महीतले स्थाने स्थापय सुमुखि सगण पदपदतले। द्विजगणांश्चतुश्चतुर्षु पादेषु भणति फणिपतिर्महीधर [?] नगण भण शशिवदने धवले ॥ पदपदतले सर्व्वेषां पदानामन्ते सगण, तथाचादौ जानीहि द्विजगणांश्चलार प्रतिपद धवलगण निर्म्मलगण योग्य, धवले धवलाख्यच्छन्दसि धवलाङ्कमेवानुक्रमणिकायां वच्यति। महीश्वरानुगुण महीश्वरानुमतमित्यर्थ इति कश्चित्, परनिपातात् फणिमहीपतिरित्यन्ये। (C)

१९२। अथैकोनविंशत्यक्षरचरणवृत्तस्य चतुस्त्रिंशदुत्तरैकशताधिकद्विषष्टिसहस्रोत्तरद्विलक्षतम भेद धवलनामक वृत्तं लक्षयति, करिअ इति। हे सरसमानसे सुमुखि रमणि जसु—यस्य पअ पअ अले—[पादे] पादे पतितान् सरस गण—श्लाघ्यगणान्

१९२। १ पलइ वसु लक्क जुअल (A) करइ रस सुणि जुअइ (B), करइ रस सुणि युअइ (C) २ रमण गति सअण (A), रमणि रिस गण (B), रमणि सिरिस गण (C) ३ तले (A, B & C) ४ दिअगण (A, B & C) ५ भणि (A), पअअ भण (B) ६ णिअ महौ (A), मही (B & C) ७ करअल गण सरिसउ ससि वअणि धवलही (A), धर पुगण सरिस भण ससि वअणि धवलही (B & C) ८ १९५ (A)

दिश्रवर चउ—द्विजवरान् चतुर्लघुकगणान् चतुर ठइग्र ठइ—स्थापयित्वा स्थापयित्वा कमलगण सगणोऽन्तगुरुरित्यर्थ, कर पाणि कमल हस्तमिति [Vide श्लोक २४ p 31—Ed] सगणनामसु कमलशब्दस्योपात्तत्वात, चउ पत्रहि—चतुर्षु पदेषु प्रतिचरण-मित्यर्थ करिअ—क्रियते तत् धवलक वृत्तमित्यर्थ, महिअले—महीतले कहि—कथ्यते इति सुगुणजुअ—सुगुणयुक्त विमल-मइ—विमलमति फणिपति पिगल सही—सत्य भणति ॥ यत्राष्टादशलघुरनन्तरमेको गुरु पतति तत् धवलनामक वृत्तमिति फलितार्थ । (E)

१९२ । करोति । क्रियते यस्य सुगुणयुतविमल[म]तिर्महीतले स्थापयित्वा रमणि सरसगणान् पादपतितान् । द्विजवराश्चतुरश्चतुर्षु पदेषु भणति फणिपति सखि कमलगण सरसमानसे सुमुखि धवलक कथय ॥ द्विजवरश्चतुर्लघु, कमल सगण । (G)

१९२ । करहि इत्यादि । करोति रस श्रुत्वा युवति विमल-मतिर्महीतले स्थापयित्वा स्थापयित्वा विराम पतत्सगण पदपद-तले । द्विजगणाश्चत्वारश्चतुर्षु पदेषु भणति फणिपतिर्महो धरण-गणा सदृशा भण शशिवदने धवल ॥ हे युवति विमलमति कविरिति शेष एतच्छन्द श्रुत्वा रस करोति, स्थापयित्वा स्थाप-यित्वा विराम पतत्सगण पादान्ते प्रतिपादान्ते, द्विजगणाश्चत्वार-श्चत्वार पदे—प्रतिपद चत्वारो द्विजगणास्तेन षोडश लघवस्तत सगण पादान्ते फणिपतिर्भणति, फणिपति कीदृश महो महो-ऽस्यास्तीति मही उत्सवयुक्त, मह उद्धव उत्सव इत्यमर, धरणगणा

जहा, तरुण तरणि तवइ[1] धरणि[2] पवण वह[3] खरा
लग[4] णहि जल बड मरु थल जण जिअण[5] हरा।
दिसइ[6] चलइ[7] हिअअ डुलइ[8] हम इकलि[9] बहू
घर णहि पिअ सुणहि पहिअ मण इछइ[10] कहू[11] ॥
१९३[12] ॥ धवलांग[13] ।

---

धाया गणा कीदृशा लघूना बाहुल्यादष्टादश लघव एको गुरु रिति प्रतिपद हे शशिवदने ईदृश धवलाख्य छन्दस्त्व भण। तत्र षट्सु वर्णेषु यति पुन षट्सु वर्णेषु यति पुन सप्तसु वर्णेषु यति। उक्त छन्द पारिजाते। नगणयुगलमनलसदृशमथ विरचय ग, रस-रस-हयविरतिकलितमिदमतिसुभग। धवलमभणद्द्विप-दृति सकलसुमतिसुख, तदिह भवति परमसुकृतिहृदयमतिसुख ॥
(II)

१९३। उदाहरति। तरुणतरणिस्तापयति धरणीं, पवनो-वहति खर, समीपे नास्ति जल, वडमरुस्थल जनजीवनहर। वसतिरुच्यते हृदय त्रुट्यति अहमेकाकिनी बधूर्गृहे नास्ति प्रिय शृणु पथिक मनसा किमिच्छसि कथय॥ एकलीत्यत्र एकारो-लघुर्ज्ञेय, वड — महत् मरुस्थलमग्रे इत्यर्थ, यदि वसति क्रियता-

---

१९३। १ तप (A) २ तरणि (B) ३ बहइ (E) ४ णिग (C) ५ जिवण (A, B & C) ६ वसइ (A & C), विसइ (B) ७ त्रुलइ (A), चलइ (B & C) ८ तुलइ (A), दलइ (B & C) ९ हमें एकलि (A), हमि सकथि (B & C) १० इछल (A), इच्छण (B & C) ११ बहू (C) १२ १९१ (A) १३ धवलङ्गा (B & C)

अवलोआअं[1] भणि[2] सुच्छंदं मण मज्झे सुक्खं[3] सबुत्तं
सुपिअं अंते ठवि[4] हत्था[5] दिज्जसु[6] कुंतीपुत्तं[7] संजुत्तं ।
गण अग्गा[8] दिज्जसु[6] एअं[9] किज्जसु[10] अंते[11] सत्ता हारा जं
इअ बत्तीसा णिअ[12] मत्ता पाअह[13] छंदो संभू णामाअं[14] ॥
१९४[15] ॥

---

हृदय घूर्णते, अहमेकाकिनी बधूर्गेहे नास्ति प्रिय, शृणु पथिक मन इच्छया कथय ॥ (G)

१९३ । उदाहरणमाह, तरुण तरणि इत्यादि । तरुणस्तरणिस्तपति धरणीं, पवनो वहति खर, निकटे नास्ति जल, महत् मरुस्थल जनजीवनहर । साथ वदसि हृदय कम्पते अहमेकाकिनी बधूर्गेहे नास्ति प्रिय शृणु पथिक मन स्थित कथय ॥ लग इ[ति] निकटवाचको मिथिलादेशीय । स्वय दूतीवचन । (H)

१९४ । अवलोकय भण सुच्छन्द मनोमध्ये सुख सुवृत्त, सुप्रियमन्ते स्थापयित्वा हस्ते दीयता कुन्तीपुत्र सयुक्त । गणोऽग्रे दीयताम् एव क्रियतामन्ते सप्त हारा इति द्वात्रिंशन्निजमात्रा पादे छन्द शम्भुनामेद ॥ सुखम् एतदवलोकनात्, सुप्रिय लघु-

---

१९४ । १ अवलोआण (A), dropt in (B), अवलोआसु (C) २ भण (A, B & C) ३ Dropt after सु up to हारा in the third quadrant in (F) ४ धरि (A) ५ हत्थो (A) ६ दिज्जउ (A) ७ कुंतीपुत्ते (E) ८ जुग्गा (B), अग्गा (F) ९ एव (B) dropt in (C) १० किज्जउ (A), dropt in (C) ११ अत (E) १२ पाअ (A) १३ पाअहि (A), पाअउ (F), पाअ (C) १४ णामोअ (A, B & C) १५ १९० (A)

द्वयमन्ते, तथादौ कि तत्राह हस्त सगण कुन्तीपुत्र कर्णो द्विगुरु तथाच सगणकर्णगणानन्तर द्विकलगण । अग्रेऽप्येव गणो दीयता हस्तकर्णा[न]न्तर सुप्रियो दीयतामित्यर्थ, किन्त्वत्र पूर्व्वलिखित-सुप्रियगणेन सह हस्तगण कर्त्तव्य इतरथा वर्णाधिक्यप्रसङ्गात्, तदन्ते सप्त गुरव । अथवा आदौ हस्तगण तत कर्णगण तत पुनरपि हस्तकर्णौ इति सयुक्तमित्यस्यार्थ, तत सुप्रिय द्विलघु । (C)

१९४ । अथैकोनविंशति[त्यक्षर]चरणस्य वृत्तस्य द्विसप्तत्यधिकैक-शताधिकत्रिसहस्रतम भेद शभुनामक वृत्त लक्षयति, अवलो-आअमिति । सुच्छद — सुच्छद एतदिति शेष [भणि —] भणित्वा [मण]मज्झे — मनोमध्ये सूक्ख — सुख सवुत्त — सवृत्त त्वम् अवलो-आअ — अवलोकय कुतीपुत्ते सजुत्त — कुतीपुत्रेण सयुक्तम अग्र-स्थितगुरुद्वयात्मकगणयुक्तमिति यावत हत्था — हस्त गुर्वतसगण-मिति यावत् दिज्जसु — दद्स्व अग्गे — अग्रे कर्णाग्रे इति यावत् एव[अ] गण दिज्जसु — एवप्रकारेण गण दद्स्व, पुनरपि सगण-कर्णौ देहीत्यर्थ, अते — सगणकर्णाते सुपिअ — सुप्रिय लघुद्वयात्मक गण ठवि — स्थापयित्वा अते — पादाते सत्ता हारा — सप्त हारान् गुरून् किज्जसु — कुरुष्व इअ — इति प्रकारेणेति भाव वत्तीसा णिअ मत्ता — द्वात्रिंशन्निजमात्रा ज — यत्र पाअह — पादेषु पततीति शेष सभू णामाअ — शभुनाम्ना छदो — छद जानीहीति शेष ॥ (E)

१९४ । अवेति । अवलोकयेद भणित्वा सुच्छदो मनोमध्ये सौख्य

जहा, सिअ बिट्ठी[1] किज्जइ[2] जीआ[3] लिज्जइ[4]
बाला[5] बुड्ढा कंपंता
बह पच्छा बाअह[6] लग्गे काअह
सब्बा दीसा झंपंता[7] ।
जइ[8] जड्डा[9] रूसइ[10] चित्ता[11] हासइ[12]
पेटे[13] अग्गी[14] थप्पीआ[15]
कर पाआ सभरि[16] किज्जे[17] भित्तरि
अप्पा अप्पी लुक्कीआ ॥ १९५[18] ॥
सभु ।

सुवृत्त सुप्रियमते स्थापय, हस्तो दीयते कुतोपुत्र मग्रे देहि, एव कुरुष्वाते सप्त हारा यत्र, इति द्वाचिशन्माचा पादे छद प्रभुनासेद ॥ आदौ हस्त मगण, सगणकर्णयोर्द्वयमित्यर्थ- स्तदते सुप्रिय लघुद्वय, कर्णौ गुरु[द्वय], हारो गुरु । (G)

१९४ । अव लोआ इत्यादि । इदानी लोकाना भण सुच्छद मनोमध्ये सुख सवृत्त सुप्रियमन्ते सस्थाप्य कुन्तीपुत्रसयुक्त । गणा-

१९५ । १ रिठठा (A) २ किज्जसु (B & C) ३ जीवा (A), आ (C) ४ गिज्जसु (B & C) ५ वाल (I) ६ वाअ (A) ७ रक्खो रक्खो जपत्ता (A) ८ जव (A) जहि (B) ९ जड्डा (B) जड्डौ (F) १० रोसइ (A, B & C) ११ चिता (A B & C) १२ हो सइ (A & B) हो सहि (C) १३ पड्डे (A) सज्झ (B & C) पेड्डे (I) १३ and १४ transposed in (A, B & C) १५ थक्कोआ (A, B & C) १६ सम्भि (A) समुरि (B) सम्बरि (C) १७ किज्जर (A) १८ १९८ (A)

नग्ने देहि एव कुरु अन्ते सप्त हारा यत्र, एव द्वात्रिंशन्मात्रा पादे शम्भुनामैतत् ॥ सुच्छन्दो भण एतच्छन्दो भण, तेन इदानीं लोकाना मनोमध्ये सुख सवृत्त। आदौ हस्त सगण दद्यात्, कीदृश हस्त कुन्तीपुत्रत्रययुक्त सगणानन्तर गुरुद्वय देय, ततोऽग्रे एव गण देहि सगण गुरुद्वय पुनर्देहि, अन्ते एतदन्ते सुप्रिय लघुद्वय सस्थाप्य तदन्ते सप्त हारा गुरव, एव समुदायेन द्वात्रिंशन्मात्रा पादे, इद छन्द शम्भुनाम। अत्र सप्तसु वर्णेषु यति, पुन पचसु वर्णेषु यति, पुन सप्तसु वर्णेषु यति । * * * (H)

१९५। उदाहरति। शीतवृष्टि क्रियते, जीवो गृह्यते, बाला वृद्धा कम्पन्ते, वहति पश्चाद्वायु लग्न काये सर्व्व देश व्याप्नोति। यदि शीत रुष्यति चिन्ता भवति सखि अग्नौ प्रविश्य स्थीयते, करपाद सचिय्य क्रियते मध्ये आत्मात्मनि गोप्यते ॥ क्रियते देवेन, रुष्यति अधिक भवति। जाआ इति पाठे जाया रुष्यति कुप्यति पृथक् स्वपिति तदा चिन्तावृद्धिर्भवति। आ[त्म]शरीर गोप्यत इत्यर्थ । (C)

१९५। शम्भुमुदाहरति, सिअ विट्ठीति। सिअ विट्ठी — शीत-वृष्टि किज्जइ — क्रियते जीआ लिज्जइ — जीवो गृह्यते देवेनेति शेष, बाला वुड्ढा — बाला वृद्धा कपता — कपते पच्छा वाअह — पश्चिमवाता बह — वाति, काअह — काये लग्गे — लगति, सव्वा दीसा — सर्वा दिश झपता — आच्छन्ना भवतीत्यर्थ । जइ जड्डा रोसइ — यदि शीत रुष्यति, तदा चित्ता हासइ — चित्त ह्रसति, पेटे — उदरे अग्गी — अग्नि थप्पीआ — स्थाप्यते, कर पाआ स[भरि]

जहि[1] आइ हत्थ[2] णरेंद विसबि[3] पाअ पंचम[4] जोहलो
जहि[5] ठाइ छट्ठहि[6] हत्थ[2] दीसइ[7] सद्द[8] अंतहि[9] णेउरो।
सुह[10] छंद गीअउ मुद्धि[11] णीअउ[12] सब्ब लोअहि जाणिओ
कइ सिट्ठि[13] सिठ्ठउ[14] दिट्ठ[15] दिठ्ठउ[16] पिंगलेण बखा-
णिओ[17] ॥ १९६[18] ॥

---

— करपादौ सकोच्य भित्तरि — मध्ये किज्जे — क्रियते अप्पा अप्पी — आत्मा आत्मनि लुक्कीआ — गोप्यते ॥ कस्यचिद्दरिद्रस्यैतद्वाक्य। प्रभुर्निवृत्त। (E)

१९५। यथा। शीतवृष्टि क्रियते, जीवो गृह्यते, बाला वृद्धा कम्पते, वहति पश्चिमवाता लगति काये, सर्वा दिशो घूर्णति। यदि जाड्य रुध्यति, चित्त हृसति, उदरेऽग्नि स्थाप्यते, करपादौ सकोच्य क्रियते मध्ये आत्मा आत्मनि गोप्यते॥ दरिद्रस्येय-मुक्ति। (G)

१९५। उदाहरणमाह, सिअ विट्ठा इत्यादि। शीतवृष्टि क्रियते, जीवो गृह्यते, बाला वृद्धा कम्पते, वहति पाश्चात्यवात लगति काये, सर्वा दिश आच्छादयन्। यदा जाड्य रुध्यति तदा

---

१९६। १ जइ (A B & C) २ हच्छ (A) ३ वेसवि (B) ४ पचह (A), पचवि (B) ५ जहि (A), जइ (B & C) ६ छठठहि (A), च्छट्टइ (B & C) ७ दिस्सइ (A) ८ सक्क (E & F) ९ अतह (A) १ सोइ (B, C, E & F) ११ मुद्ध (A) dropt in (B) १२ लीअउ (A), dropt in (B) णअउ (E) १३ सिट्ठु (A) १४ सिट्ठिउ (C) १५ Dropt in (B) दिट्ठि (C & E) १६ दिट्ठ (C) १७ वाखाणिओ (B) १८ १९९ (A)

चित्ते भवति अग्निपृष्ठे स्थातव्य करपाद सम्हत्य सकुचित कृत्वेत्यर्थ क्रियते मध्ये आत्मना आत्मनि लीयते ॥ एकोनविंशत्यक्षरप्रस्तारस्य पञ्च लक्षाणि चतुर्विंशतिसहस्राण्यष्टाशीत्यधिक शतद्वय भेदास्तेषु कियन्तो भेदा उक्ता, शेषभेदा स्वयमवगन्तव्या । (H)

१९६ । अथ विंशत्यक्षरा ॥ यस्यादौ हस्त नरेन्द्रौ द्वावपि पाद पञ्चमो जोहल, यदि स्थाने षष्ठे हस्तो दृश्यते शब्दोऽन्ते नूपुर । तच्छन्दो गीता शुद्धा नीयते * कविसृष्ट्या सृष्ट दिष्ट्या दृष्ट पिङ्गलेन व्याख्यात ॥ गीतेति छन्दोनाम, यदा कविसृष्टि तदैव इद सृष्ट, दिष्ट्या भाग्येन दृष्ट गुरुभि, सो इत्यत्र ओकारो-लघु । (C)

१९६ । अथ विंशत्यक्षरचरणस्य वृत्तस्य षट्सप्तत्युत्तरपञ्चशता-धिकाष्टचत्वारिंशत्सहस्रोत्तर दश लक्ष भेदा भवति, तत्राष्टोत्तर-शताधिक [षट्सप्तत्यधिक] द्विसप्ततिसहस्रोत्तरत्रिलक्षतम [३७२०७६] भेद गीतानामक वृत्त लक्षयति, जहीति । हे मुद्धि—मुग्धे जहि—यत्र आइ—आदौ हत्थ—हस्त गुर्वत सगण इति यावत् णरेंद विण्णवि—नरेन्द्रद्वयमपि मध्यगुरुजगणद्वयमपीति यावत्, तत पाअ—पाद आदिगुरुर्भगण इत्यर्थ, पञ्चम—पञ्चम जोहलो—मध्यलघुरग[ण] इति यावत्, जहि—यत्र छट्ठहि—षष्ठे ठाइ—स्थ[स्था]ने हत्थ—हस्त गुर्वत सगण अतहि—अते सगणाते पादाते वा सल्ल—शल्य लघु णेउरो—नूपुर गुरु दीसइ—दृश्यते । इद च क्रियापद सर्वै प्रथमातैर्गणवाचकै पदै सह योजनीय । सोइ—तत्तत् णीअउ—समीचीन सव्व लोअहि

जाणिओ—सर्व्वलोकैर्ज्ञात त्रैलोक्यप्रसिद्धमिति यावत, कवि सिट्ठि सिट्ठउ—कविसृष्ट्या सृष्ट दिट्ठ दिट्ठउ—दृष्ट्या दृष्ट पिंगलेण वखाणिओ—पिंगलेन विख्यापित गीअ छद—तद्गीतानामक वृत्तमित्यर्थ ॥ वृत्तविशेषणानि पद्यपूरणायेति मतव्य। (E)

१९६। अथ विंशत्यक्षरा कृति ॥ जहीति। यत्रादौ हस्तो-नरेंद्रद्वयमपि पाद पचमो जोहलो यत्र स्थायी षष्ठे हस्तो-दृश्यते शल्यमते नूपुर। तत् छदो गीता मुग्धे समीचीन सर्व-लोकैर्ज्ञात कविसृष्टिसृष्ट दृष्टिदृष्ट पिंगलेन व्याख्यात॥ हस्त सगण, नरेंद्रो जगण, पादो भगण, जोहलो रगण, शल्य लघु, नूपुर गुरु। गीतानामक छद। (७)

१९६। विंशत्यक्षरप्रस्तारे कानिचिच्छदांसि वदति, जइ आइ इत्यादि। यत्र आदौ हस्तो नरेन्द्रौ द्वावपि पाद पञ्चमो योधो-यत्र स्थाने षष्ठे हस्तो दृश्यते शब्द अन्ते नूपुर। तच्छद गीता मुग्धाना नीता सर्वलोकैर्ज्ञाता कविश्रेष्ठसृष्टा दिष्ट्या दृष्टा पिंग-लेन व्याख्याता॥ यत्र आदौ हस्त सगण, द्वौ नरेंद्रौ जगणौ, पादो भगण, योधो रगण पचम, षष्ठस्थाने हस्त सगणस्तत शब्दो लघुरन्ते नूपुरो गुरुश्छन्दसो नाम गीता, कीदृशी मुग्धाना मनोहराणा मध्ये नीता गणिता सर्वलोकैर्ज्ञाता, कीदृशी गीता कविश्रेष्ठेन सृष्टा दृ[दि]ष्ट्या भाग्येन दृष्टा पिंगलेन व्याख्याता। पशुपतिनैव व्याख्यात। कविसृष्टिसृष्टा कविसृष्टौ सृष्टा यदा कवय' सृष्टास्तदा एषापि सृष्टेत्यर्थ, दृष्टिश्छन्द शास्त्र तेन[तया] दृष्टा। सगण-जगणद्वय-भगण-रगण-सगण-लघुगुरुभिर्वर्णैर्गीता।

जहा,

जइ[1] फुल्ल[2] केअइ चारु चपअ[3] चूअ[4] मंजरि[5] बंजुला[6]
सब दीस दीसइ केसु काणण पाण बाउल भम्मरा[7] ।
बह पोम्म[8]गंध बिबंधु[9] बंधुर मंद[10] मंद समीरणा
णिअ[11]केलि कोतुक[12]लास लंगिम[13] लग्गिआ तरुणी[14]
जणा[15] ॥ १९७[16] ॥ गीता ।

---

तद्गणक्रमराहित्येन मात्रावृत्ते हरिगीतेय [Vide श्लोक १९१, p 306] ।
उक्त छन्द पारिजाते । सगण पुरो विनिधाय जद्वयमुज्ज्वल भगण-
न्ततो—रगण तत सगण निधेहि विधेहि ल गुरुमन्तत । फणि-
राजनिर्मितवृत्तमचरगीतक * * * * * हरिगीतकेति पुरा कला-
कृतवृत्तकेऽनियमस्थित ॥ (H)

१९७ । यथा । उदाहरति । यदि फुल्लानि केतकी-चारुचम्पक-
यूथिमञ्जरी-वञ्जुलानि सर्व्वस्या दिशि दृश्यते किंशुककानन पान-
व्याकुलभ्रमरा । वहन्ति पद्मगन्धविवन्धुवन्धुरा मन्दमन्दसमीरणा
निजकेलिकौतुकलासलङ्गिमलग्नास्तरुणीजना ॥ विशेषेण वन्धुर्व्वि-
वन्धु, वन्धुरा विलचणा । (C)

---

१९७ । १ जहि (A), जइ (B & C) २ फुल्ल (F & E) ३ चम्पइ (B & C) ४ जूथ (C) ५ मरि (E) ६ वञ्जला (B), वञ्जुला (E & F) ७ Dropt in (B), भ्मरा (C) ८ Dropt in (A) पाम (B & C), पम्म (E) ९ वधु विवध (A), विवन्ध (B) १० Dropt in (B) ११ पिअ (A) १२ कौतुक (A, E & F) १३ लाङ्गम (B) १४ तरुणि (F) १५ गणा (A) १६ २०० (A)

१९७। गीतामुदाहरति, जहेति। जह—यत्र केअइ चारु चपअ चूअ मञ्जरि वजुला—केतकिचारुचपकचूतमञ्जरीवञ्जुलानि [केतकी] चारूणि चपकानि चपकपुष्पानि चूतस्य मञ्जर्य्य नव-पल्लवानि वञ्जुलानि चैतानीत्यर्थ फुल्लु—पुष्पितानि विकसिता-नीति यावत, केसु काणण—किंशुककानन सब दीस दीसइ—सर्वस्या दिशि दृश्यते, भम्मरा—भ्रमरा पाण वाउप्र[ल]—पान-व्याकुला मकरंदानुपानप्रमत्ता इत्यर्थ जाता इति शेष। पम्म गध विबधु—पद्मगधविबधु क[म]लसौरभस्य विशिष्टो वधुरित्यर्थ, बधुर विचचणो मानिनीमानभजने इति भाव [मद मद—मन्दमन्द] समीरणा—समीरण वात वह—वाति, तरुणीजना णिअ केलि कौ[को]तुक लास लगिम लग्गिआ—निजकेलि-कौतुकलास्यलगमलग्ना। (F)

१९७। यथा। यत्र फुल्लकेतकीचारुचपकचूतमजरीवजुला सर्वा दिशो दृश्यते किंशु[क]काननपानव्याकुला भ्रमरा। वहति पद्मगध बधुवधुरो मद मद समीरणो निजकेलिकौतुकलास्य-लगिमलग्नस्तरुणीजन॥ (G)

१९७। उदाहरणमाह, जहि फुल्ल इत्यादि। यत्र फुल्ला केतकी-चारुचम्पकचूतमञ्जरीवञ्जुला सर्व्वासु दिक्षु दृश्यन्ते किंशुककानने पानोन्मत्ता भ्रमरा। वहति पद्मगधविशिष्टबधुवधुरो मदमद समीरणो निजकेलिकौतुकलासभङ्गीलग्नास्तरुणीजना॥ सुवर्ण-केतकीविकाशो वसन्ते, वजुला अशोका, वजुल पुसि तिनिशे वेतसाशोकयोरपि। (H)

रग्गणा पलंतत्रा[1] पुणो णरेंद कतत्रा सुछक्कएण[2]
हार[3] एक्क मतही सुसद्द पात्र अंतही सुसक्कएण।
गंडत्रा गणेहु ए सुबस[4] सब बीसए[5] फणिंद गाउ[6]
तीस मत्त पात्र[7]पत्त हार तीत्र भात्रएण[8] सद्द त्राउ[9] ॥
१९८[1] ॥*

१९८। रगणा पतन्ति पुन[र्न]रेन्द्र कान्त सुषट्केन हारमेक मन्त्रयस्व जानीहि शोभन शब्दो लघु सुसत्कृतेन षट्केनेत्यर्थ, शोभनप्रकारेणेति वार्थ। * * * त्रिंशतस्तृतीयभागो दश सख्या-स्तेन हारा दश, शब्दा लघवो दशेत्यर्थ। (C)

१९८। अथ विंशत्यक्षरचरणस्य वृत्तस्यैकपचाशदधिक[नव]-नवतिसहस्रोत्तरपच[षट्]लक्षतम [६९९०५१] भेद गण्ड[क]नामक वृत्त लक्षयति, रग्गणेति। रग्गणा—रगण मध्यलघुर्गण इति यावत् पलतत्रा—पतति पुन कतत्रा—कात णरेंद—नरेन्द्रो मध्यगुरुर्जगण इति यावत् पततीति पूर्वेणान्वय, एव सुसक्कएण—स्वशक्त्या निजकविलसामर्थ्येन सुछक्कएण—सुषट्केन भण गणषट्केनेत्यर्थ मह एक्क—एक हारु—हार गुरु मतही—आमन्त्रयस्व स्थापयस्वेत्यर्थ, पात्र अतही—पादाते सुमद्द—

१९८। १ पलअतत्रा (A), पुलन्तत्रा (B) २ सुच्छन्दएण (C) ३ हारु (E & F) ४ सुवण (A) ५ ककणे (A), टक्कणे (B) टङ्कण (C) ६ एम णाउ (A) ७ पाउ (E & F) ८ भाग एहु (A), भाअ एहु (B & C) ९ भाउ (A)
१ १ १ (A) * This metre has been designated गण्ड in Pingala's Sanskrit treatise Vide Ghosh's Compendium p 97—1 1

सुशब्द शोभनो लघुर्द्वय इति शेष । यत्र सख—सख्याया वीसए—विंशति सुवस—सुवर्णा तीस मत्त—त्रिंशन्मात्रा पाश्र पत्त—पादे प्राप्ता तीश्र भाश्रएण—तृतीयभागेन त्रिंशत्तृतीयभागो-दश [त]त्सख्ययेति यावत् हार गुरु स दश लघु श्राउ—श्रायाति पततीति यावत्, ए—एन गण्डश्रा—गण्डक गणेज्ञ—गणयस्व बुध्यस्वेत्यर्थ, इति फणिंद—फणींद्र गाउ—गायति ॥ प्रथम गुरुस्तदनतर लघु पुन गुरुस्तदनतर लघुरेवक्रमेण यत्र विंशत्य-चराणि चरणे पतति तद्गण्डकनामक वृत्तमिति फलितार्थ । (E)

१९८। रग्गेति। रगण पतति पुनर्नरेंद्र कात एतयो सुषट्केन, हार एकोऽते सुशब्द पादाते स्वशक्तिकया। गडक गणयस्व वर्णसख्या विंशति फणींद्रो गायति, त्रिंशन्मात्रा पादे प्राप्ता हारास्तृतीयभागेन शब्द श्रायात ॥ नरेंद्रो जगण, रजयो षट्क कर्त्तव्य, हारो गुरु, सुशब्दो लघु ॥ (G)

१९८। रग्गण इत्यादि। रगण पतति पुरो नरेन्द्र कात सुषट्केन, हारम् एवमामन्त्रय[स्व] सुशब्द पादान्ते सुसंज्ञतेन। गण्डका गणय श्रस्य छदसो वर्णसख्या विंधेहि फणीन्द्रो गायति, त्रिंशन्मात्रा पादे, प्राप्तस्तृतीयभागो हार सुशब्दस्तावान् ॥ श्रादौ रगण पतति यत्र पुनर्नरेन्द्र कान्त सुषट्केन रगणस्ततो जगण एवक्रमेण षड्गणा कर्त्तव्या हार गुरुमेकमामन्त्रय[स्व] कुरु, सुशब्द लघु पादान्ते श्रामन्त्रय[स्व] कुरु, सुसज्ञतेन सुप्रकारेण गण्डका छदसो नाम गणय, श्रस्य छन्दसो वर्णसख्या टकले कुरु त्रिंश-न्मात्रा पादे, त्रिंशन्मात्रायास्तृतीयभाग प्राप्त तृतीयभागो दश

जहा,

ताव बुड्ढि[१] ताव सुद्धि[२] ताव दाण ताव माण[३] ताव[४] गव्व
जाव जाव[५] हत्थ[६] णच्च[७] बिज्जु रेह[८] रंग णाइ[९] एक्क दव्व ।
एत्थ[१०] अंत[११] अप्प दोस देब[१२] रोस होइ[१३] णट्ठ सोइ सव्व[१४]
कोइ बुड्ढि[१५] कोइ सुद्धि[१६] कोइ दाण कोइ माण कोइ गव्व ॥
१९९[१७] ॥ गंडका ।

तेन दश गुरवस्तावतो लघवस्तेन दश लघव, समुदायेन विंशत्यक्षराणि पादे । टकशब्दो गौडदेशीय लघ्वाकरणवाचक । (H)

१९९ । उदाहरति । तावद्बुद्धिस्तावत् शुद्धिस्तावद्दान तावन्मान तावद्गर्व्वं, यावत् हस्ते हस्ते नृत्य[ति] सर्व्वं विद्युदिव रङ्गमेक द्रव्य । स्वयमेनात्मनो दोषेण दैवरोषेण भवति नष्ट तदेव सर्व्वं, कुत्र बुद्धि कुत्र शुद्धि कुत्र दान कुत्र मान कुत्र गर्व्वं ॥ एक द्रव्य सर्व्वं सर्व्वात्मक द्रव्य, विद्युद्रङ्ग चञ्चलत्वात्, स्त्रीनिमित्तेन यदा तदा इत्यध्याहार्य्यं । (C)

१९९ । गण्डकमुदाहरति, तावेति । जाव — यावत् हत्थ — हस्ते

१९९ । १ and २ transposed in (E & F) ३ Transposed in (E) ४ Dropt in (B) ५ ताव सव्व (A) जाव once only in (E & F) ६ हच्छ (A) ७ सव्व between णच्च and बिज्जु (A & C) ८ and ९ dropt in (A & C) ९ Dropt in (B) १० एच्छ (A), dropt in (B & C) ११ अत्य (B), dropt in (C) १२ Dropt in (B & C), दैव (E) १३ Dropt in (A, B & C) १४ दव्व (E) १५ and १६ transposed in (E) १६ Dropt in (C) १७ २०२ (A)

वे कणा गध हारा[१] बलअ दिअगणा हत्थ[२] हारा पलंता[३]
एक्कला[४] सल्ल कणा[५] धअपअ[६] सहिआ कंकणा[७] अंत कंता[८]।
बीसा एक्क[९]ग्गला जं पलइ लहु गुरू बारहा होइ[१०] दीहा[११]
पिंडा[१२] बत्तीस अग्गा सउ[१३] फणि भणिआ[१४] सद्दरा होइ[१५]
मुद्दा[१६] ॥ २००[१७] ॥

---

बिज्जु रेह रग णाइ — विद्युद्रेखारगवत अतिचचलमिति भाव एक्क — एक दब्ब — द्रव्य णच्च — नृत्यति, ताव बुद्धि — तावद्बुद्धि तावत् शुद्धि तावत् मान तावत दान तावत् गर्व । [एत्थ अत — एतदन्ते] सोइ — तत् द्रव्य अप्प दोस — आत्मदोषेण देव रोस — दैवरोषेण यद्दीति शेष णट्ठ — नष्ट होइ — भवति तदेति शेष, कोइ बुद्धि — [कुत्र बुद्धि] कुत्र शुद्धि कुत्र मान कुत्र दान कुत्र गर्व ॥ (E)

१९९ । यथा । तावत् शुद्धिस्तावद्बुद्धिस्तावन्मानस्तावद्दान तावद्गर्वो यावद्धस्ते नृत्यति विद्युल्लेखारगणवद् एक द्रव्य। एतन्मध्ये आत्मदोषेण दैवरोषेण भवति नष्ट तत्सर्वं, का बुद्धि का शुद्धि कि दान को मान को गर्व ॥ (G)

१९९ । उदाहरणमाह, ताव बुद्धि इत्यादि । तावद्बुद्धिस्तावत् शुद्धिस्तावद्दाम तावन्मानस्तावद्गर्व, यावद् यावद्धस्ते हस्ते नृत्यति

---

२०० । १ हार (A) २ चच्छ (A) ३ बलता (A) ४ एकणा (A, B & C), dropt in (F) ५ कण (F) ६ धच बल (A), धच वट (B & C) ७ सखचा (A) ८ कणा (A) ९ एक (A & C) १० पाच (A) होहि (E) ११ दिहा (E) १२ पेडा (A) १३ अग्गा सच (A), अग्ग स (E) १४ फणिचा (B) १५ हा (C) १६ सुदा (A) १७ २ २ (A)

सर्वविद्युद्रङ्गमेकं द्रव्यं। एतदन्ते आत्मदोषेण दैवरोषो भवति नष्टं तदेव द्रव्यं, तदा का बुद्धिः का शुद्धिः किं दानं को मानः को गर्व्वः ॥ विज्जु रङ्ग इति विद्युद्वत् चञ्चलं, द्रव्यनाशे आत्म-दोषेण दैवरोष कारणं। विंशत्यक्षरप्रस्तारस्य दशलक्षाणाष्टचत्वा-रिंशत्सहस्राणि षट्सप्तत्यधिकानि पञ्चशतभेदास्तेषु भेदद्वयमुक्तं शेषभेदाः स्वयमवगन्तव्याः । (H)

२०० । अथ एकविंशत्यक्षरा ॥ द्वौ कर्णौ गन्धहारौ वलयद्विज-गणौ हस्तहारौ वलन्तौ एकः शल्यः कर्णौ ध्वजपटः कङ्कणमन्ते कान्त । विंशतिरेकाधिका यत्र पतति लघुगुरुभिर्द्वादश भवन्ति दीर्घाः, पिण्डिताः द्वात्रिंशदग्रं शतं फणिभणिता स्रग्धरा भवति मुग्धा ॥ पिण्डिता पादचतुष्कं एकीकृता द्वात्रिंशदधिकशतमित्यर्थः । (C)

२०० । अथैकविंशत्यक्षरचरणस्य वृत्तस्य त्रि[द्वि]पञ्चाशदुत्तरैक-शताधिकसप्तनवतिसहस्रोत्तरं विंशतिलक्षं भेदा [भ]वन्ति, तत्र पञ्चोत्तरशतत्रयाधिकनवाधिकनवतिसहस्रोत्तरैकलक्षतमं [त्रिनव-त्युत्तरनवशताधिकद्विसहस्रोत्तरत्रिलक्षतमं ३०२९९३] भेदं स्रग्धरा-नामकं वृत्तं लक्षयति, बे कण्णेति। यत्र प्रथमं बे कणा — द्वौ कर्णौ गुरुद्वयात्मकगणावित्यर्थः, ततो गध हारा — गधहारौ लघु-गुरू इति यावत्, ततश्च वलअ दिअगणा — वलयद्विजगणौ गुरु-लघुचतुष्टयात्मकगणाविति यावत्, तत हत्थ हारा — हस्तहारौ सगणगुरूकावित्यर्थः यत्र पलता — पतत, ततश्च एक्कला — एकलं शल्यं लघु कणा — कर्णौ गुरुद्वयात्मको गणः इत्यर्थः अंत — अन्ते कर्णगणाग्रे इत्यर्थः धअपअ सहिआ — ध्वजपटसहितं लघ्वादि-

त्रिकलगणसहित इत्यर्थं कता—कांत ककणा—ककण गुरुरित्यर्थं यत्र पततीति शेष । ज—यत्र एक्कगला—एकाधिका बीसा—विंशति एकविंशतिरिति यावत् लहु गुरू—लघुगुरव पलइ—पतति बारहा—द्वादश दीहा—दीर्घा होहि—भवति, पिण्डा—पिण्डिता बत्तीस अग्गा सउ—द्वात्रिंशदधिकशत मात्रा इति शेष यत्र भवतीति पूर्वेणान्वय, सा फणि भणिआ—फणिभणिता मुद्धा—मुग्धा मनोज्ञेति यावत् सद्धरा—स्रग्धरा होइ—भवति ॥ स्रग्धरानामक तद्वृत्त भवतीत्यर्थं । (E)

२०० । अथैकविंशत्यक्षरा प्रकृति ॥ बे कणेति । द्वौ कर्णौ गधहारौ वलयद्विजगणौ हस्तहारौ पतत एक शल्य कर्णा-ध्वजपटसहित ककणमते कांत । विंशतिरेकाधिका यत्र पतति लघुगुरवो द्वादश भवति दीर्घा, पिण्डीभूता द्वात्रिंशदधिक शत फणिभणिता स्रग्धरा भवति मुग्धा ॥ कर्णा द्विगुरु, गधो लघु, हारो गुरु, वलय गुरु, द्विजश्चतुर्लघु, हस्त सगण, शल्य लघु, ध्वजो लघुगुरू, ककण गुरु । (G)

२०० । एकविंशत्यक्षरप्रस्तारस्य कानिचित् वृत्तान्याह, बे कणा इत्यादि । द्वौ कर्णौ गन्धहारौ वलयद्विजगणौ हस्तहारौ पतत, एक शल्य कर्णा ध्वजपटसहित ककणमन्ते कान्त । विंशति-रेकाधिका यत्र पतति लघुगुरुभ्या द्वादश भवन्ति दीर्घा, पिण्ड द्वात्रिंशदधिक शत फणिभणिता स्रग्धरा भवति शुद्धा ॥ यत्र प्रथम द्वौ कर्णौ, कर्णा गुरुद्वयगण कर्णद्वयगणेन गुरुचतुष्टय, गधो लघुर्हारो गुरुर्वलयो गुरुस्ततो द्विजगणश्चतुर्लघ्वात्मकस्तत

जहा, ईसा रोस प्पसाद[1]प्पणदिसु[2] बहुसो
सग्ग गंगा जलेहिं
आमूलं पूरिदाए तुहिण कर कला[3]
रुप्प सिप्पीअ[4] रुद्दो[5] ।
जोण्हा[6] मुत्ताह[7] लिक्षं णद[8] मउलि[9] णिहि-
त्तग्ग[10] हत्थेहिँ[11] दोहिं
अग्घं[12] सिग्घं[13] व देन्तो[14] जअइ गिरिसुआ[15]
पाअ पंकेरुहाणं॥
२०१[16] ॥ स्रग्धरा ।

---

इस्त सगणो हारो गुरु पतति, एक शब्दो लघु कर्णो गुरुद्वय, कर्ण कीदृश ध्वजपटसहित ध्वजपटो लघुगुरुरूपो गणस्तत्सहितोऽन्ते ककण गुरु कान्त । एकाधिका विंशतिर्व्वर्णा लघुगुरुभ्या, द्वादश भवति दीर्घा गुरव, पारिशेष्यान्नव लघव, पिण्ड शरीर द्वाचिंशदधिकशतमाचात्मक छद समुदायेन भवति, इय शुद्धा स्रग्धरा फणिभणिता ॥ अच सप्तसु वर्णेषु यति, पुन सप्तसु

---

२०१। १ प्पसद (C) २ प्पणतिसु (B) ३ चला (A) गणा (B) ४ Dropt in (B), सिद्धीच (C), सीप्पीच (E) ५ वद्दो (B) वद्दो (E) ६ जोह्ला (A & B), नोड्ना (E) ७ मोत्ताह (B, C & E) मुत्तह (F) ८ णज (B), णच्च (C) पणद (F) ९ मोउलि (E) मुलि (F) १ णिहित्ताग्ग (C) ११ हच्छेहिँ (A), त्य (E) १२ चग्ग (B), चग्घ (F) १३ दिगच (B), सिग्घे (E), सिघ्घ (F) १४ देणतो (B), देन्तो (C) वे देतो (E), वदेंतो (F) १५ गौरिसुचा (E) १६ २०४ (A)

वर्णेषु यति, पुन सप्तसु वर्णेषु यति । उक्त छन्द पारिजाते । आदौ मो रस्ततो भस्तदनु च नगण स्याद्यकारस्ततो यौ, सप्ताश्वाश्वैर्विराम फणिपतिगदिता स्रग्धरेय प्रसिद्धा । एषा सत्काव्यमुद्रावचनपरिणता मानसानामुदञ्चत्स्रोतोमूर्च्छत्तरङ्गो भवति कवियश श्री प्रमोद स्रवन्ती ॥ (H)

२०१ । उदाहरति । ईर्ष्यारोषप्रसादप्रणतिषु बहुश स्वर्गगङ्गाजलैरामूल पूरितया तुहिनकरकलारूप्यशुक्त्या रुद्र । ज्योत्स्नामुक्ताफलयुक्त नतमौलिनिहिताग्रहस्ताभ्या द्वाभ्याम् अर्घं गौरीप्रमिव ददत् जयति गिरिसुतापादपङ्केरुहाणा ॥ ईर्ष्याजन्यो रोषस्तन्निमित्तये प्रसादस्तदर्थं प्रणतिषु, चन्द्रकलेव शुक्तिपात्र । अर्थान्तरानुकर्षमाह, ज्योत्स्नेति मत्वर्थे नप्रत्यय, इवार्थे बसन्द । (C)

२०१ । स्रग्धरामुदाहरति, ईसेति । ईसा रोस पसाद पणदिसु—ईर्ष्यारोष[प्र]सादप्रणतिषु ईर्षया यो रोषस्तन्निवृत्तये य प्रसादस्तन्निमित्त या प्रणतयस्तास्वित्यर्थ बहुसो सग्ग गगा जलेहि—बहुश स्वर्गगगाजलौघै आमूल पूरिदाए—आमूल पूरितया तुहिण कर कला रुप्प सिप्पीअ—तुहिनकरकलारौप्यशुक्त्या गो[गिरि]सुआ पाअ पकेरुहाण—गिरिसुता[पाद]पकेरुहयो दोहि—द्वाभ्या णद मौ[मउ]लि णिहित्ताग्ग हत्थेहिँ दोहि—नतमौलिनिहिताग्रहस्ताभ्या द्वाभ्या जोओ[ण्हा] मोत्ताह लिस—ज्योत्स्नायुक्त [मुक्ता]फलयुक्तम अग्घ गौग्घ देन्तो व—[अर्घं गौप्र] ददद्दिव रुदो—रुद्र जअइ—जयति ॥ स्रग्धरा निवृत्ता । (E)

आइहि जत्थ[1] पाअगण[2] पअलिअ जोहल[3] अंत धरीजे[4]
काहल सद्द गंध इअ मुणि गण[5] कंकण अंत[6] करीजे ।
सद्दइ एक्क[7] भेरि[8] चलु[9] णरबइ फुक्कइ[10] संख[11] सुभब्बा[12]
चामर जुग्ग अंत जहि[13] पअलिअ
एहु[14] णरेंदउ[15] कब्बा[16] ॥ २०२[17] ॥

---

२०१ । यथा । ईर्षारोषप्रसादप्रणतिषु बहुश स्वर्गगगाजलैरामूल पूरितया तुहिनकरकलारौप्यशुक्त्या रुद्र । ज्योत्स्नामुक्ताफलित प्रणतमौलिनिहिताग्रहस्ताभ्या द्वाभ्यामर्घं गौरीमिव ददज्जयति गिरिसुतापादपकेरुहयो ॥ (G)

२०१ । उदाहरणमाह, ईसा रोस इत्यादि । ईश्वरीरोषप्रसाद-प्रणतिषु बहुश स्वर्गगगाजलैरामूल पूरितया तुहिनकरकला-रूप्यशुक्त्या रुद्र । ज्योत्स्नामुक्ताफलाढ्य नतमौलिनिहिताग्रहस्ताभ्या द्वाभ्याम् अर्घं गौरीं ददत् जयति गिरिसुतापादपङ्केरुहयो ॥ कर्पूरमञ्जरीसाटकस्य । (H)

२०२ । आदौ यत्र पादगण प्रकटित जोहलोऽन्ते ध्रियते, काहलशब्दगन्धशब्दवाच्या लघवस्तेषा मुनिगण सप्त लघव ककण

---

२०२ । १ इच्छ (A) २ भगण गण (A) ३ जोहलु (B) जोहणु (C) ४ ठवीजे (A B & C) ५ एम दिअगण (A), इ मुणिगण (B) मुइ मुणिगण (C) ६ ताह (A & B), ताइ (C) ७ एक (C) ८ भेरी (E) ९ चल (E & F) १० फुकइ (A), फुक्कब (B & C) ११ सद्द (A) सखब (C) १२ सुहब्बा (B & C) १३ जह (E & F) १४ एह (A) हेह (B) १५ णरिंदउ (A & F), णरेदइ (B), णरेन्द (C) १६ कहा (E & F) १७ २०५ (A)

क्रियते हार । शब्द्यते भेरी चलितो नरपति फुल्कियते शङ्ख सुभव्यश्चामरयुग यत्रान्ते प्रकटित तन्नरेन्द्रकाव्य ॥ शब्द्यते कथ्यते, फुल्कियते उच्यते, काव्य छन्द । तथाच यदा नरेन्द्रो गच्छति, तदा पदातियोधा काहलशब्दसुगन्धिकङ्कणान्यनुसरन्ति, भेरी शब्द्यते, अन्यो नरपतिरनुगच्छति, शङ्ख फुल्कियते, चामरयुग प्रकटीक्रियते । (C)

२०२ । अथैकविंशत्यक्षरचरणस्य वृत्तस्य विंशत्युत्तरशतद्वयाधिकचत्वारिंश[एकोनविंशत्युत्तरपञ्चशताधिकपञ्चाश]त्सहस्रोत्तरचतुर्लक्षतम [४५०५१९] भेद नरेन्द्रनामक वृत्त लक्षयति, आइहीति । जत्थ — यत्र आइहि — आदौ पाअगण — पादगणो गुर्वादिर्भगण इति यावत् पअलिअ — प्रकटित, अत — अते भगणावसाने इति यावत् जोहल — जोहलो मध्यलघुरगण इत्यर्थ धरीजे — ध्रियते स्थाप्यत-इति यावत्, तत काहल सद्द गध — काहलशब्दगधा एकलघव-इत्यर्थ इअ — एते मुणि गण — मुनिगणा सप्त गणा इति यावत् देया इति शेष, तथाच रगणानतर सप्त लघव स्थाप्या इति भाव, ताह — तत सप्तलघ्वनतरमिति यावत् ककण — कङ्कण गुरुरित्यर्थ करीजे — क्रियते । ततश्च एक्क भेरी[रि] — एका भेरी लघुरित्यर्थ सद्दइ — शब्दायते स्थाप्यत इत्यर्थ, णरवइ — नरपतिर्मध्यगुरुर्जगण चल — चलति तिष्ठतीत्यर्थ, सुभव्वा — सुभव्य सख — लघ्वात्मको-गण' फुक्कइ — फुल्कियते उच्यते इत्यर्थ जह — यत्र अत — अते पादाते चामर जुग्ग — चामरयुग गुरुद्वयमित्यर्थ पअलिअ — प्रकटितम एऊ — एतत् णरिंदउ छदा — नरेंद्रच्छद ॥ (E)

२०२। आईति। आदौ यत्र पादगण प्रकटितो जोहलोऽते भ्रियते, काहलशब्दगधा इति मुनिगणा ककणमते क्रियते। शब्दायते एका भेरी चलति नरपतिरुच्यते शख सुभव्य चामरयुगमते यत्र प्रकटितमेतन्नरेंद्रच्छद॥ पादो भगण, जोहलो रगण, मुनि सप्त, एवञ्च सप्त लघव कार्या इत्यर्थ, क[कण] गुरु, भेरी लघु क्रियते नरपतिर्जगण, शखो लघु, चामर गुरु। (G)

२०२। आइहि जत्य इत्यादि। आदौ यत्र पादगण प्रकथ्यते योधोऽन्ते स्थाप्यते, काहल शब्द गध एव मुनिगण ककणस्तत्र क्रियते। ~शब्दायते एका भेरी चलितो नरपति फुत्कार्य्य शख सुभव्य, चामरयुगमते यत्र प्रकटितमेतत् नरेन्द्रकाव्य॥ यत्र आदौ पादगणो भगण प्रकथ्यते, अन्ते भगणान्ते जोहलो रगण स्थाप्यते, काहलो लघु शब्दो लघुर्गन्धो लघुरेवक्रमेण लघुत्रय ततो मुनिगणस्तुर्लघुगणस्तेन सप्त लघव इत्यर्थस्तत्र ककण गुरु क्रियते। एका भेरी शब्दायते लघु भवतीत्यर्थस्ततो नरपतिर्जगणश्चलति भवति शख फूत्कार्य्य लघु स्थापय, शख कीदृश सुभव्य, चामरयुगमन्ते प्रकथ्य गुरुद्वय स्थाप्य, एतन्नरेन्द्राख्य काव्य॥ अथच यदा नरपतिश्चलति तदादौ पादगण पदातिगण प्रकटितो-भवति, योधगणोऽन्ते स्थाप्यते, तत काहलशब्द, कर्पूरागुरु-सारादेर्गन्ध, मुनिगणा द्विजा आशीर्वादपुरस्सरमग्रे चलन्ति, ककणाद्याभरण क्रियते, भेरी शब्दायते, शखफूत्कारो जायते, नरेन्द्रस्य पार्श्वे चामरद्वय स्थाप्यते॥ अत्र द्वादशसु वर्णेषु यति, पुनर्नवसु वर्णेषु यतिरथवा त्रयोदशसु वर्णेषु यतिरष्टसु वर्णेषु

जहा, फुल्लिअ[1] केसु चंद[2] तह पअलिअ[3]
मंजरि तेज्जइ[4] चूआ
दक्खिण बाउ[5] सीअ[6] भइ पवहइ[7]
कंप बिओइणि[8] हीआ ।
केअइ[9] धूलि सव्व दिस[10] पसरइ[11]
पीअर[12] सव्वउ भासे
आउ[13] बसंत काइ[14] सहि[15] करिअइ[16]
कंत ण थक्कइ[17] पासे ॥
२०३[18] ॥ नरेन्द्र । ।

---

यति । उक्तं छन्दःपारिजाते । भ रचयाय रेफनयुगलकमथो जयुग च यकार, पिङ्गलनाग[राज]निगदितमिह वर्णनरेन्द्रमुदार । भानुविराममेतदथ तदपरवर्णविरामविकल्प, श्लिष्टनवाष्टकान्यतरदिति कुरु वेह विभाति सुकल्प ॥ (H)

२०३ । [उदाहरति] फुल्ल किंशुक, चन्द्रस्तथा प्रकटित, मञ्जरि व्यनक्ति चूत, दक्षिणो वात शीतो भूत्वा प्रभवति, कम्पते वियोगिनीहृदय । केतकीधूलि सर्व्वदिक्षु प्रसारिता सर्व्वं पीत भासते,

---

२०३ । १ फुल्लिअ (E & F) २ चपअ केसु (A) ३ विअसिअ (A), पल्लिअ (C) ४ वज्जइ (C) ५ वाअ (B & C) ६ सिअल (A) ७ पवबइ (B), परहइ (C) ८ विजोइणि (F) ९ केअलि (B), केसइ (F) १० दिसे दिसे (A) ११ पसरिअ (B & C) १२ Dropt in (B), पीवर (F) १३ आइ (A & B) १४ साहि (B), काहि (C) १५ सखि (F) १६ करिहउ (A), करिहइ (B & C) १७ त्यक्त (F) १८ २ ६ (A)

बिज्जूमाला आई[१] पाए तिअ दिअगण[२] तह बहु[३]गुण जुत्ता
अंते कण्णा सुद्धा बण्णा[४] भण फणिवइ कइबर[५] गुण[६]जुत्ता।[७]
जं बत्तीसा मत्ता थक्के पअ पअ पअलिअ लहु[८] गुरु[९] सोहा
एसो[१०] हंसी णामा[११] छंदो[१२]
सअल बिबुहअण किअ मण[१३]मोहा[१४] ॥ २०४[१५] ॥

---

आगतो वसन्त सखि किं करवाणि कान्तो न तिष्ठति पार्श्वे॥ सुवर्णकेतकी वसन्ते स्फुटतीति । (C)

२०३। नरेन्द्रमुदाहरति, फुल्लिअ इति । केसु — किंशुक फुल्लिअ — पुष्पित तह — तथा चंद — चन्द्र पअलिअ — प्रकटित *** (F)

[Here four leaves are wanting in the MS (E) —Ed ]

२०३ । यथा । पुष्पित किंशुक, चन्द्रस्तथा प्रकटित, मञ्जरीं त्यजति चूता, दक्षिणवायु शीतो भूत्वा प्रवहति, कम्पते वियोगिनी-हृदय। केतकीधूलि सर्वदिक्षु प्रसरति, पीत सर्वमपि भासते, आगतो वसन्त कि सखि क्रियते, कान्तो न तिष्ठति पार्श्वे ॥ (G)

२०३। उदाहरणमाह, फुल्लिअ इत्यादि। फुल्लित किंशुक, चपक प्रकटित, मञ्जरी गृहीता चूतैर्दक्षिणो वात शीतो भूत्वा वहति, कम्पते वियोगिनीहृदय। केतकीधूलि सर्वासु दिक्षु

---

२०४। १ पाए (A) २ दिअगह (C) ३ विअ (B & C) ४ दिज्जे धण्णा (F) ५ करिवर (A) ६ ग (A) ७ Second quadrant dropt in (C) ८ and ९ transposed in (B & C) १० एसा (A) ११ णागा (A) १२ छन्दो (C) १३ बुद्धो अण मणह अर (A), बुहअ अणु मणुहर (B), बुधह मणह हरह (C) १४ सोहा (B & C) १५ २०७ (A)

